LET'S CELEBRATE

# NOVEMBER

OUR SPECIAL MONTH

**WATCH OUT FOR THE**

## CHILDREN'S SPECIAL ISSUE

**OF CHANDAMAMA IN NOVEMBER 2003**



*Exciting stories from child-writers!*

*Illustrations from child-artists!*

*Jokes, riddles, games - all from children!*

*Your favourite comics, contributed by a child!*

This special issue with more pages of fun for Rs.12/-

**FROM KIDS, FOR KIDS**

**DON'T MISS CHANDAMAMA'S CHILDREN'S SPECIAL ISSUE!**

**A SPARKLER TO LIGHT UP YOUR DIWALI!!**

# एतस्य अङ्कस्य विशेषाः सम्पुटः - २१ अक्टोम्बर् - २००३ सञ्चिका - ७

पुराणकथावली



२६



नाणकफलकः वृद्धिवृक्षः (वेतालकथा)

१९

मायासरोवरः - १९



१३



विघ्नेश्वरः - २२

४५



## अन्तरङ्गम्




**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**

*Remittances in favour of Chandmama India Ltd.*
to
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**

वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा 'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ -*
**चक्रपाणिः नागिरेड्डी च**

# सिद्धाहारसेवनं देशस्य शापः भवेत्

एषु दिनेषु अस्माकं समयस्य सञ्चयाय विविधानि आधुनिकसाधनानि आगतानि सन्ति ! दूरवाणी, जङ्गमदूरवाणी, फेक्स्, ई-मेल् इत्यादीनि सम्पर्कसाधनानि त्वरितगत्या सन्देशं प्रापयन्ति । तस्मात् वयम् अधिकाधिकं विरामसुखम् अनुभवन्तः स्मः ।

एषः विरामसुखानुभवाय प्रयासः सिद्धाहारसंस्कृतेः जनकः अस्ति । किन्तु एषा संस्कृतिः किम् अस्माकं लाभाय ? किं सा अस्माकं समयमात्रं सञ्चिनोति, उत जीवितकालम् अपि ह्रस्वीकरोति ? एषु दिनेषु प्रवृत्तम् एकम् अध्ययनं ज्ञापयति यत् एते सिद्धाहारपदार्थाः न केवलं महार्घाः, अपि तु स्वास्थ्यनाशकाः अपि इति । 'आहाराभासः' इति, 'कु-आहारः' इति वा निर्देशम् अपि अर्हति सः । पाश्चात्त्यदेशतः स्वीकृता एषा आचारपद्धतिः एतावता एव बह्वीः समस्याः उद्भावितवती अस्ति । एतद्विषये स्यान्फ्रान्सिस्कोनगरीयः मैकेल् मेस्कार्न्हस् वदति - ''अमेरिकादेशे या समस्या दृश्यते सा समग्रे प्रपञ्चे अपि दृश्यते इति वचनं श्रूयते लोके । सिद्धाहारः, मांसं, सोडायुक्तं जलम् इत्यादीनां रूपेण अमेकिरादेशीया आहारपद्धतिः भारतं प्रति यत् प्रेष्यते तस्मात् किं भारते सामजिकस्वास्थ्यक्षेत्रे नूतना समस्या न उद्भवेत् ? बुभुक्षातः मरणम्, स्थौल्यहेतुकः आहारः - अनयोः अन्यतरस्य चयनाय किं भारतं बलात् न प्रवर्त्यते एतस्मात् ? सांस्कृतिकपरम्पराणां, कृषिक्षेत्राणां च वैविध्यतः भारते आरोग्यकराः बहवः आहारसेवनक्रमाः प्रवृद्धाः सन्ति । किं तेषां नाशनाय प्रयासः उचितः ?'' इति ।

एतस्य निन्द्यस्य आहारसेवनक्रमस्य प्रथमबलिः भवितुम् अर्हन्ति बालाः । अतः मातापितृभिः एतद्विषये विशेषतः अवधातव्यम् । एषः देशस्य शापः यथा न भवेत् तथा जागरूकता आश्रयणीया इदानीम् एव ।

---

*सम्पादकः -* **विश्वम्**





# योग्यं प्रतिवचनम्

प्रकाशः कस्यचित् अनाथालयस्य निमित्तं धनसङ्ग्रहं कुर्वन् आसीत् । कश्चित् तम् अवदत् - '' भवता किमर्थं गोपीनाथश्रेष्ठी न दृश्येत ? सः तु महाधनिकः । प्रभूतं धनं दद्यात् अपि सः'' इति । एतत् युक्तम् इति अमन्यत प्रकाशः । अतः सः विश्रान्तिसङ्घे तम् अपश्यत् ।

वस्तुतः श्रेष्ठी महाकृपणः । समाजसेवाकार्यार्थं धनदानं व्यर्थम् एव इति चिन्तनम् आसीत् तस्य । किन्तु प्रकाशः मित्राणां पुरतः एव धनयाचनां कृतवान् आसीत् इत्यतः झटिति निराकृतिं दर्शयितुं न शक्नोति स्म सः । तस्मात् सः प्रकाशम् अवदत् - ''पुनः कदाचित् आगत्य मिलतु'' इति ।

अनन्तरदिने प्रातः एव प्रकाशः श्रेष्ठिनः गृहं गतवान् । गृहस्य अट्टे स्थितः श्रेष्ठी वातायनात् एव तदीयम् आगमनम् अपश्यत् दूरात् एव । 'अहो, अयम् आगतः एव । अस्तु, कथमपि उपायेन एतं निवारयिष्यामि' इति विचिन्त्य श्रेष्ठी सेवकम् आहूय अवदत् - ''स्वामी गृहे नास्ति इति तं वदतु'' इति ।

प्रकाशः द्वारशब्दम् अकरोत् । सेवकः द्वारम् उद्घाटितवान् । प्रकाशः तम् अवदत् - ''अहं भवतः स्वामिना मेलितुम् इच्छामि'' इति ।

''क्षन्तव्यः श्रीमन् ! मम स्वामी बहिः गतः अस्ति । सः कदा आगमिष्यति इति न ज्ञायते'' इति अवदत् सेवकः ।

प्रकाशः क्षणकालं विचिन्त्य तम् अवदत् - ''भवतु, किं भवान् तस्मै मम एकं सन्देशं दद्यात् ?'' इति । सेवकः अङ्गीकारपूर्वकं शिरः चालितवान् ।

''पुनः कदाचित् यदा एवं गम्यते तदा आत्मना सह शिरः अपि नेतव्यं, वातायने एव न त्यक्तव्यम् इति स्वामिनं वदतु'' इति उक्त्वा पृष्ठतः अपश्यन् ततः वेगेन निर्गतवान् ।

सोपानानाम् उपरि स्थित्वा एतत् सम्भाषणं श्रुतवान् श्रेष्ठी अप्रतिभः जातः । सः अवगतवान् यत् एषः प्रकाशः वातायनात् पश्यन्तं मां दृष्टवान् आसीत् इति ।



जन्मशताब्दं निमित्तीकृत्य

# लोकनायकस्य संस्मरणम्

एतस्मिन् वर्षे लोकनायकस्य जयप्रकाशनारायणवर्यस्य जन्मशताब्दः आचर्यमाणः अस्ति ।

एतस्य जन्म १९०२ तमे वर्षे अक्टोबर्मासस्य ११ दिनाङ्के बिहारराज्यस्य सितबदियाराग्रामे जातम् । यदा सः पटनानगरे महाविद्यालये पठति स्म तदा स्वातन्त्र्यान्दोलनसम्बद्धासु गुप्तसभासु भागं वहति स्म । तत्र छात्रनेतॄणां भाषणानां श्रवणतः तेन राष्ट्रभक्तिप्रेरणा प्राप्ता । महाविद्यालयीयाध्ययनस्य समाप्तेः अनन्तरं सः उच्चाध्ययनाय अमेरिकादेशं गन्तुम् ऐच्छत् । अध्ययनकाले अर्थोपार्जनाय तेन उपाहारगृहद्राक्षोद्यानयन्त्रागारादिषु कार्यं कृतम् । पशुवैद्यशालायाम् अपि तेन कार्यं कृतम् । एवं विविधान् उद्योगान् कुर्वन् श्रमजीवनस्य महत्त्वम् अवगतवान्, श्रमिकजनानां दुःखकष्टादीनि अपि ज्ञातवान् सः । समाजसेवाक्षेत्रीयस्य अध्ययनस्य अनन्तरं सः 'समाजसेवा करणीया' इति स्वप्नं वहन् १९२९ तमे वर्षे भारतं प्रत्यागतवान् ।



भारतं प्रत्यागतः सः गान्धिनेतृत्वयुक्तं काङ्ग्रेस्पक्षं प्रविष्टवान् । यत्र जन्म अवलम्ब्य भेदभावः न स्यात्, यत्र उच्चनीचभावः न भवेत्, राष्ट्रियसम्पत्तिविषये सर्वेषां समानः अधिकारः यत्र स्यात् तादृशस्य समाजस्य निर्माणं करणीयम् इति तस्य सङ्कल्पः आसीत् । अल्पे एव काले सः राष्ट्रियनायकः जातः । समाजवादस्य नूतनविचारधारायाः नायकत्वेन सः समाजस्य पुरतः अतिष्ठत् ।

भारतं यदा स्वतन्त्रं जातं तदा समाजवादिविचारधारीयाः नायकाः काङ्ग्रेस्तः पृथग्भूय स्वतन्त्रं पक्षं रचितवन्तः । किन्तु १९५२ तमे वर्षे प्रवृत्ते निर्वाचने ते शासनाधिकारग्रहणे असमर्थाः जाताः । तथापि नेहरूवर्यः केन्द्रसर्वकारे भागग्रहणाय जयप्रकाशनारायणवर्यं निमन्त्रितवान् । किन्तु जयप्रकाशवर्यः एतत् निमन्त्रणं तिरस्कृतवान् । १९५४ तमे वर्षे विनोबाभावेवर्येण आरब्धे सर्वोदयान्दोलने सः भागम् अवहत् । स्वतन्त्रतासमानतासिद्धान्तम् अवलम्ब्य स्थिताय सर्वोदय-आन्दोलनाय सः आत्मानं समर्पितवान् ।

दिने दिने विषमतां यान्तीं देशस्य अवस्थां दृष्ट्वा खिन्नः जयप्रकाशवर्यः १९७१ तमे वर्षे सामाजिकपरिवर्तनस्य आनयनाय 'पूर्णक्रान्ति'कल्पनां साकारीकर्तुं प्रयासम् आरब्धवान् । इन्दिरागान्धिवर्यायाः तत्कालीनः सर्वकारः स्वसत्तां सङ्कटग्रस्तां भावयन् 'आपत्स्थितिम्' अघोषयत् । जयप्रकाशवर्यः च बन्दी जातः । आपत्कालसमाप्तेः अनन्तरं निर्वाचने भागं वहन् काङ्ग्रेस्सर्वकारः जयप्रकाशवर्यं प्रार्थयत् यत् सर्वकारे सहभागितां स्वीकृत्य देशस्य मार्गदर्शनं करणीयम् इति । किन्तु जयप्रकाशवर्यः एतदवसरे अपि काङ्ग्रेस्मन्त्रिमण्डले भागग्रहणं निराकृतवान् । लोकशक्तेः विजयतः सः नितरां सन्तुष्टः आसीत् ।

देशस्य समस्ता जनता तस्य त्यागभावनायाः प्रशंसाम् अकरोत्, तं 'लोकनायक'बिरुदेन निरदिशत् च ।

जयप्रकाशवर्यः १९७९ तमवर्षस्य अक्टोबर्मासस्य अष्टमे दिनाङ्के भौतिकदेहम् अत्यजत् ।



# दानगुणः

राजनगरे रामभद्रः नाम कश्चन धनाढ्यः वसति स्म । भगवान् तस्मै धनेन सह दानगुणम् अपि दत्तवान् आसीत् । अन्यस्य दुःखस्य दर्शनात् तस्मिन् करुणा उत्पद्यते स्म । विपत्तिग्रस्तानां साहाय्यम् औदार्येण करोति स्म सः । एतस्मात् तदीया सम्पत्तिः क्रमशः क्षीणा जाता ।

तस्य पत्नी चन्द्रिका अपि पत्यनुकूला एव । प्रतिवेशिन्यः तां बोधयन्ति स्म यत् भवती पत्युः दानप्रवृत्तिं निवारयतु इति । 'यदि एवमेव दानं क्रियेत तर्हि अल्पे एव काले रिक्तहस्तता भवेत्, कठिना समस्या च सम्मुखीकरणीया स्यात्' इति तां वदन्ति स्म ते ।

एतानि वचनानि श्रुत्वा हासं प्रदर्शयन्ती चन्द्रिका वदति स्म - ''मेघाः जनवसतौ यथा तथैव अरण्ये अपि वर्षन्ति । वर्षणविषये पक्षपातं न आचरन्ति ते । वर्षणं तेषां स्वभावः । अरण्ये किमर्थम् अस्माभिः वर्षणं करणीयम् इति विचिन्त्य यदि मेघाः वर्षणं स्थगयेयुः तर्हि नदीषु जलं कथं भवेत् ? लोके किमपि व्यर्थं न । सर्वं भगवतः सङ्कल्पस्य अनुगुणं प्रवर्तते । दानगुणस्य कारणतः अस्माभिः कष्टं प्राप्तव्यम् इति यदि भगवतः सङ्कल्पः स्यात् तर्हि तं निवारयितुं को वा शक्नुयात् ? सर्वं भगवतः इच्छायाः अनुगुणं प्रवर्तते'' इति ।

कालः क्रमशः गतः । रामभद्रस्य पुत्रौ षड्वर्षीयाष्टवर्षीयो जातौ । ग्रामस्य सर्वे जनाः रामभद्रस्य शास्त्रपाण्डित्यं विशेषतः श्लाघन्ते स्म ।

कदाचित् चन्द्रिका पतिम् उक्तवती - ''सर्वेभ्यः अर्थिभ्यः भवान् ददाति । 'न' इति कदाचिदपि न उच्यते भवता । मया अपि एतद्विषये आक्षेपः न कृतः । इदानीम् आवयोः पुत्रौ प्रवृद्धौ स्तः खलु ? तयोः विद्याभ्यासाय उत्तमा व्यवस्था करणीया



आवाभ्याम् । एतद्विषये भवता किं चिन्तितम् इति न ज्ञायते मया । भवान् शास्त्रपण्डितः इति सर्वे जानन्ति । अतः मम अपेक्षा यत् भवान् राज्ञः पाठशालायाम् अध्यापकः भवेत् इति । दानात् धनं क्षीयते । विद्या तु तथा न क्षीयते । बालयोः कृते धनसम्पत्तिः कदाचित् न दीयेत, किन्तु विद्यासम्पत्तिः तु अवश्यं दातव्या । अतः नगरे भवतः वासः वरम्'' इति ।

पत्न्या उक्तं युक्तम् इति अमन्यत रामभद्रः । अतः सः नगरं प्रति प्रस्थितवान् तस्मिन् एव दिने ।

मध्येमार्गं तेन इच्छापुरं नाम ग्रामः प्राप्तः । तत्र तस्मिन् दिने शिवालयस्य ध्वजस्तम्भस्य प्रतिष्ठापनकार्यक्रमः आसीत् । पूर्वतने वर्षे झञ्झावातस्य कारणतः तत्रत्यः ध्वजस्तम्भः ध्वस्तः जातः आसीत् । रामभद्रः नगर-गमनविचारं परित्यज्य शिवालयं प्रविष्टवान् । सः दानशीलः धनिकः अस्ति इति जानन्तः जनाः तं महता आदरेण स्वागतीकृत्य अन्तः नीतवन्तः ।

शिवालयस्य धर्माधिकारी भूस्वामी अपि तत्र उपस्थितः आसीत् । तेन रामभद्रस्य परिचयः प्राप्तः । रामभद्रः तस्यैव भूस्वामिनः अधिकारक्षेत्रे निवसति स्म । यस्याः पाठ-शालायाः निमित्तं रामभद्रः गच्छन् आसीत् तस्याः प्रमुखः आसीत् एषः भूस्वामी एव । परस्परवार्तालापात् एतत्सर्वम् उभाभ्याम् अपि ज्ञातम् ।

सन्तुष्टः भूस्वामी रामभद्रम् अवदत् - ''भवता त्वरया नगरं प्रति गन्तव्यं नास्ति । यथानुकूल्यम् उद्योगाय आगच्छतु भवान् । भवतः नियुक्तिः तु मया अनुमन्यते एव'' इति ।

एतत् श्रुत्वा रामभद्रः नितरां सन्तुष्टः । सः शिवस्य अभिषेकम् अकारयत् । अर्चकाय प्रभूतां दक्षिणाम् अपि अयच्छत् । ततः गृहं प्रत्यागत्य सः पत्नीं मार्गे प्रवृत्तं समग्रं विस्तरेण अवदत् ।

ग्रामं त्यक्त्वा नगरं प्रति गमनाय रामभद्रस्य मनः वस्तुतः न इच्छति स्म । तथापि सर्वेषाम् इच्छायाः पूरकः सः पत्नीं कथं निराशां कुर्यात् ? तस्य मनसि द्वैधीभावः भवति स्म । अतः कदाचित् सः मनश्शान्त्यै नदीतीरम् आगत्य उपविष्टवान् ।

नद्याः तीरे दुर्गामन्दिरम् आसीत् । यदा एषः तत्र गतः तदा अन्यस्मात् ग्रामात् आगतः कश्चन युवकः मन्दिरस्य पुरतः स्थित्वा

प्रार्थयमानः आसीत् - ''हे देवि ! अहं विद्यावान् अस्मि । किन्तु मूल्यं नास्ति मम । उद्योगं प्राप्तुं मम प्रयत्नः आसीत् । किन्तु तत्र महती स्पर्धा । स्पर्धामयं जातम् अस्ति एतत् जगत् । यत्र मया उद्योगप्राप्त्यै प्रयासः कृतः तस्मिन् स्थाने एतस्य ग्रामस्य रामभद्रनामकः जनः नियुक्तः भविष्यति इति श्रूयते । तस्य तत्र गमनं कथमपि निवारयतु अम्ब ! तम् एतं विषयं वक्तुम् एव अहम् एतं ग्रामम् आगतः अस्मि । भवतीं प्रार्थये चेत् मम इष्टसिद्धिः भवेत् इति तस्य गृहं प्रति गमनात् पुर्वम् अहमत्र आगतः'' इति ।

ततः अनतिदूरे स्थितः रामभद्रः एतत् सर्वं श्रुतवान् । सः तत्समीपं गत्वा तदीयं विवरणं प्राप्तवान् ।

तस्य युवकस्य नाम देवीदासः इति । तेन सम्यक् शास्त्राध्ययनं कृतम् आसीत् । नगरे तेन पाठशालायाम् उद्योगार्थं प्रयासः कृतः आसीत् । सः प्राप्येत इति आशा आसीत् अपि । तावता तेन वार्ता श्रुता यत् सः उद्योगः दास्यते इति भूस्वामी रामभद्राय वचनं दत्तवान् अस्ति इति । अतः प्रधानाध्यापकः तम् उक्तवान् यत् अर्हतायां सत्याम् अपि भवते इदानीम् एषः उद्योगः न दीयते, यदि रामभद्रः षण्मासाभ्यन्तरे अपि अत्र अध्यापनाय न आगच्छेत् तर्हि एतत् स्थानं भवते दीयेत कदाचित् इति ।

देवीदासस्य कथनं श्रुत्वा नितरां खिन्नः रामभद्रः अचिन्तयत् यत् मया एतस्य साहाय्यं करणीयम् एव इति ।

अतः सः तेन सह नगरं गत्वा -



'षण्मासानन्तरम् अपि मम आगमनम् अत्र सर्वथा न सम्भाव्यते' इति उक्त्वा तत्रत्यम् अध्यापकोद्योगं देवीदासाय दापयित्वा ग्रामं प्रत्यागतवान् ।

गृहं गतः सः पत्नीं देवीदासस्य मेलन-वृत्तान्तम् उक्त्वा आत्मना कृतम् अपि अवदत् ।

दाम्पत्यजीवने ऐदम्प्राथम्येन पतिं दोषिणं भावयन्ती सा अवदत् - ''शक्तिम् अतिक्रम्य दानाय प्रवृत्तिः न श्रेयसे । अग्रे जीवने किं किं परिवर्तनं भवेत् इति को वा जानाति ? सर्वं भगवदधीनम् इति चिन्तनं न युक्तम्'' इति ।

ग्रामीणाः एतां वार्तां ज्ञातवन्तः । रामभद्रस्य ग्रामत्यागं ते अपि न इच्छन्ति स्म । अतः ते रामभद्रं सानुरोधं सूचितवन्तः यत् भवान् अस्मद्ग्रामे एव कस्याश्चित् पाठशालायाः

आरम्भं करोतु इति ।

रामभद्रः एतत् अङ्गीकुर्वन् स्वस्य भूमौ एव योग्यं भवनं निर्माप्य द्वित्रान् सहायकान् अध्यापकान् नियुज्य पाठशालाम् आरब्धवान् एव ।

ततः रामभद्रेण आरब्धायाः एतस्याः नूतनपाठशालायाः वार्ता मासाभ्यन्तरे भूस्वामिना श्रुता ।

सः असन्तुष्टः सन् स्वस्य आप्तसहायकम् अवदत् - ''रामभद्रः सज्जनः दानशीलः च इति अस्माभिः श्रुतम् आसीत् । अतः अस्मत्पाठशालायाः कृते सः चितः । किन्तु एतदभ्यन्तरे तेन स्वयं पाठशाला आरब्धा इति श्रूयते । भवान् एतद्विषये सर्वं विवरणम् आनयतु'' इति ।

आप्तसहायकः अविलम्बेन एव राजनगरं गतवान् । आदौ सः ग्रामप्रमुखात् पाठशाला-विषये विषयसङ्ग्रहम् अकरोत् । पाठशाला भूस्वामिनः नाम्ना एव आरब्धा इति तेन ज्ञातम् । तस्य व्ययं सर्वं रामभद्रः स्वयं निर्वहति स्म ।

आप्तसहायकः रामभद्रं दृष्ट्वा तदीयां विद्यादानप्रवृत्तिं बहुधा श्लाघित्वा प्रतिगत्य भूस्वामिनं प्रवृत्तं सर्वं निवेदितवान् ।

तत् श्रुत्वा भूस्वामी अवदत् - ''अस्मत्प्रतिस्पर्धिरूपेण रामभद्रः स्वक्षेत्रे पाठशालाम् आरब्धवान् यत् तत् तु सर्वथा अनुचितं खलु ?'' इति ।

तदा आप्तसहायकः अवदत् - ''प्रतिस्पर्धिता का अस्ति अत्र ? पाठशाला प्रचलति अस्मन्नाम्ना एव । व्ययः तु कोऽपि नास्ति अस्माकम् । अतः अहं तु चिन्तयामि यत् रामभद्रः अस्माकं कीर्तिम् एव वर्धयन् अस्ति इति । अतः वस्तुतः रामभद्रः प्रोत्साहनीयः अस्माभिः'' इति ।

एतस्मात् सन्तुष्टः भूस्वामी अवदत् - ''भवदुक्तं सत्यम् एव । वस्तुतः अस्मत्क्षेत्रे रामभद्रः अस्ति यत् तत् अस्मासु अभिमानं जागरयति'' इति ।

ततः सः पाठशालाव्ययस्य निर्वहणाय पञ्चाशदेकरमितां भूमिं रामभद्राय अर्पितवान् । रामभद्रस्य पुत्रयोः अध्ययनाय अपि उत्तमां व्यवस्थां कृतवान् सः । नगरे वसन्तौ तौ बालौ योग्ये अध्ययने उद्युक्तौ जातौ ।





# मायासरोवरः

## १९

*[मायासरोवरेश्वरः वञ्चनाव्यवहारं कुर्वन् जयशीलस्य कण्ठे पाशं स्थापितवान् । जयशीलः तं पाशं छेत्तुम् ऐच्छत् । किन्तु मायासरोवरेश्वरः मधुरैः वचनैः वशीकृत्य काञ्चनमालां जयशीलं च मायासरोवरं प्रति नीतवान् । एषा वार्ता नरभक्षकाणां द्वारा सिद्धसाधकः ज्ञातवान् । तदनन्तरम् ....]*

नरभक्षकः प्रवृत्तं सर्वं श्रावयित्वा विचित्रगजस्य उपरि उपविष्टवतः बन्दीकृतवतः वर्णनं यदा कृतवान् तदा सिद्धसाधकः अवगतवान् यत् सः अन्यः न, अपि तु जयशीलः एव इति । शत्रुभिः सह स्थिता सा सुन्दरी का स्यात् इति तेन न ज्ञातम् ।

राजा कनकाक्षः नरभक्षकाणां वचनं श्रुत्वा आश्चर्यचकितः । तदा सिद्धसाधकः राजानम् अवदत् - ''महाराज ! अहम् अनुज्ञया अनुग्रहणीयः । मम मित्रं जयशीलं मायासरोवरेश्वरस्य जनाः नीतवन्तः सन्ति । महान्तम् अपि शूरं तं ते कथं बन्दीकृतवन्तः इति न ज्ञायते मया । तस्य रक्षणं मम आद्यं कर्तव्यम् । अतः एषोऽहं प्रस्थितः'' इति ।

एतावत् उक्त्वा सः नरवानरस्य स्कन्धम् आरूढवान् । राजा कनकाक्षः तस्य गमनं निवारयन् अवदत् - ''सिद्धसाधक ! जयशीलस्य रक्षणं ममापि दायित्वम् । अहं



कैश्चित् पदातिभिः अश्वरोहिभिः च सह भवन्तम् अनुसरिष्यामि । अस्माभिः विना विलम्बं मायासरोवरस्य अन्वेषणं करणीयम् । अतः भवान् जलवृकराक्षसं तद्विषये किमर्थं न पृच्छेत् ?'' इति ।

सिद्धसाधकः अङ्गीकारपूर्वकं शिरः चालयित्वा शूलम् उन्नीय जलवृकसमीपं गत्वा तदीयम् उरः लक्ष्यीकृत्य गृहीत्वा अवदत् – ''अये ! सत्यं वदतु । भवान् वस्तुतः अपि मम सेवकः, उत मायासरोवरेश्वरस्य गुप्तचरः कश्चित् ?'' इति ।

एतत् श्रुत्वा सः जलवृकराक्षसः सिद्धसाधकस्य पादयोः पुरतः गदां स्थापयित्वा अवदत् – ''स्वामिन् ! जलवृककुले जातः कदापि असत्यं वक्तुं न अर्हति । भवतः कृते प्राणान् अपि समर्पयितुम् अर्हः स्वामिभक्तः सेवकः अस्मि अहम्'' इति ।

''यदि भवतः वचनं सत्यं तर्हि मायासरोवरः कुत्र अस्ति इति वदतु तावत्'' इति अवदत् सिद्धसाधकः ।

''आर्य ! इतः पूर्वम् अपि मया उक्तम् आसीत् यत् मायासरोवरः कुत्र अस्ति इति कथनात् मम शिरः सशब्दं भग्नं भविष्यति इति । सरोवरराजः अस्मज्जातीयानां कृते एवं शापं दत्तवान् अस्ति'' इति दैन्येन अवदत् जलवृकराक्षसः ।

''वृकभट ! भवतः प्राणानां कोऽपि अपायः न भविष्यति । अहं महाकालस्य उपासकः अस्मि । यदि भवान् प्राणैः वियुक्तः भवेत् तर्हि अहं क्षणाभ्यन्तरे भवन्तं कैलासं प्रति प्रेषयित्वा स्वर्गसुखं दापयिष्यामि । कापि चिन्ता मास्तु भवतः'' इति अवदत् सिद्धसाधकः शूलेन आकाशं दर्शयन् ।

तदा जलवृकः – ''अस्तु । अहं सङ्केतेन सूचयितुं प्रयत्नं करिष्यामि'' इति उक्त्वा एकया शुष्कशलाकया भूमौ रेखां लिखन् उच्चैः आक्रोशनम् अकरोत् – ''अहो, मम शिरः भग्नं भवत् अस्ति'' इति ।

सिद्धसाधकः जलवृकराक्षसेन लिखिताः रेखाः परिशीलयन् अपृच्छत् – ''अये जलवृक ! काः एताः रेखाः ? एतासु एवं वक्रता किमर्थम् ?'' इति ।

जलवृकः शिरः अनुन्नीय एव आपादमस्तकं कम्पमानः – ''श्रीमन् ! एषः अस्ति निकटस्थः पर्वतः । एते पर्वतस्थाः वृक्षाः । एतेषु सर्वोन्नतः वृक्षः एकस्य मृद्राशेः उपरि अस्ति । एतं वृक्षम् आरुह्य उपरितनशाखायां

स्थित्वा पूर्वस्यां दिशि एकवारं, पश्चिमायां दिशि एकवारं च दृष्टिः प्रसारिता चेत् अनन्तरम् उत्तरस्यां दिशि दृश्यते माया-सरोवरः'' इति उक्त्वा हस्ताभ्यां शिरः गृहीत्वा – ''श्रीमन् ! मया रहस्यं प्रकटितम् अस्ति । मम शिरः छिन्नं भविष्यति । एषोऽहं मृतः'' इति उक्त्वा भूमौ अपतत् ।

सिद्धसाधकः अवनम्य जलवृकराक्षसस्य नासिकायाः समीपे हस्तं स्थापयित्वा परीक्ष्य – ''महाराज ! अन्धविश्वासः कथम् अपाय-करः स्यात् इति एतस्य जलवृकस्य दर्शनात् अवगन्तव्यम् अस्माभिः । एषः शापभीत्या अधः पतितः अस्ति । किन्तु नायं मृतः'' इति राजानम् उक्त्वा नरभक्षकान् सः आदिष्टवान् – ''भोः, झटिति गत्वा त्रिचतुरघटमितं जलम् आनयन्तु अविलम्बेन'' इति ।

नरभक्षकाः जलवृकं पश्यन्तः मौनेन स्थितवन्तः आसन् । तदा सिद्धसाधकः शूलम् उन्नीय गर्जितवान् – ''अयि दुष्टाः ! किं भवद्भिः न श्रुता मम आज्ञा ?'' इति ।

नरभक्षकाणां नेतुः नेत्रसङ्केतं प्राप्य गणाचार्यः अग्रे आगत्य कनकाक्षमहाराजं साष्टाङ्गं नमस्कृत्य – ''महाराज ! एतस्य भूतनाथस्य इतः प्रेषणात् अस्मान् अनु-गृह्णातु । एतं जलवृकराक्षसम् अस्मभ्यं दापयतु । भवतः नाम कृतज्ञतापूर्वकं स्मरन्तः एतं खादिष्यामः वयम्'' इति उक्तवान् ।

यावत् गणाचार्यस्य कथनं न समाप्तं तावता सिद्धसाधकः तस्य कर्णं गृहीत्वा अतर्जयत् – ''अये दुष्ट, नरभक्षक ! शूलेन



विद्ध्वा भवन्तम् इदानीं महाकालाय बलि-रूपेण अर्पयिष्यामि'' इति ।

सिद्धसाधकः गणाचार्यं शूलेन मारयितुं यावत् उद्युक्तः तावता जलाश्वम् आरुह्य वेगेन तत्र आगतः सर्पणखः उच्चस्वरेण अवदत् – ''सिद्धसाधक ! अलं त्वरया । मायासरोवरीयैः जलवृकराक्षसैः सह युद्धं करणीयम् अस्ति अस्माभिः । तस्मिन् प्रयत्ने एतेषां नरभक्षकाणां साहाय्यं कियत् प्राप्येत इति ज्ञातव्यम् अस्ति अस्माभिः'' इति ।

एतं ध्वनिं श्रुत्वा सिद्धसाधकः मुखं परिवर्त्य अपश्यत् । तावता गणाचार्यः ततः पलाय्य गणीयैः अमिलत् ।

सर्पणखः सिद्धसाधकसमीपं गत्वा अश्वात् अवतीर्य भूमौ मृतः इव पतितं जलवृकं पश्यन् अवदत् – ''सिद्धसाधक ! किं भवता एषः परलोकं प्रति प्रेषितः ? एषः



विश्वासपात्रं सेवकः आसीत्'' इति ।

''एषः विश्वासपात्रम् अस्ति इति तु सत्यम् । स्वस्य राज्ञि यथा तथैव माया-सरोवरेश्वरस्य शक्तौ अपि अपारविश्वासः अस्ति एतस्य । किमपि शापवचनं स्मरन् एषः मायासरोवरं प्रति गमनाय मार्ग रेखाभिः सूचयन् एव भूमौ पतितः । मम तु विश्वासः अस्ति यत् एषः न मृतः इति'' इति अवदत् सिद्धसाधकः ।

अत्रान्तरे कनकाक्षमहाराजस्य सेवकाः केचन घटैः जलम् आनीय जलवृकस्य उपरि पातितवन्तः । जलस्पर्शात् इतस्ततः लुठन् जलवृकः नेत्रे अनुद्धाट्य एव उच्चस्वरेण अपृच्छत् – ''अहं कुत्र अस्मि ? नरके उत मायासरोवरे ?'' इति ।

सिद्धसाधकः जलवृकं पृष्ठे प्रहरन् – ''अये जलवृक ! शापात् मुक्तः अस्ति भवान् । भवन्तम् अहम् उज्जीवितवान् अस्मि । उत्तिष्ठतु तावत्'' इति ।

एतत् श्रुत्वा जलवृकः उत्थितवान् । स्वपार्श्वे सर्पणखं कनकाक्षमहाराजं, तदीय-सैनिकान् च दृष्ट्वा सः अवदत् – ''एषः हिरण्यपुरस्य राजा खलु ? हंसरथे उपविश्य यदा प्रयाणं क्रियते स्म तदा एतस्य लक्षणं वर्णितवान् आसीत् वैद्यदेवः'' इति ।

राजा कनकाक्षः सर्पणखस्य विलक्षणं वेषं, तदीयं वाहनं जलाश्वं च दृष्ट्वा आश्चर्य-चकितः । सः वैद्यदेवप्रस्तावम् अपि न जानाति स्म । तदर्थम् आश्चर्येण अपृच्छत् सः – ''कोऽयं वैद्यदेवो नाम ? किं सः अस्मद्राज्यस्य जनः ?'' इति ।

'महाराज ! सः कस्य देशस्य जनः इति अहं न जानामि । सिद्धसाधकवर्यः जानीयात्'' इति अवदत् सर्पणखः ।

''सिद्धसाधक ! वैद्यदेवः किं भवता ज्ञायते ?'' इति अपृच्छत् राजा कनकाक्षः ।

वैद्यदेवविषयकं रहस्यं प्रकाशनीयम् उत न इति क्षणं विचिन्त्य सिद्धसाधकः अवदत् – ''महाराज ! वैद्यराजसम्बद्धं किञ्चन रहस्यम् अस्ति, यच्च मायासरोवरेश्वरेण न ज्ञायते, तदीयशत्रुभिः जलवृकराक्षसैः अपि न ज्ञायते । सः अपि जयशीलः इव अमरावती-नगरस्यैव निवासी'' इति ।

''किम् उक्तं भवता ? जयशीलः अमरावतीनगरस्य निवासी इति ? यस्य राजधानी अमरावती अस्ति, तस्य देशस्य राजा रुद्रसेनः अस्माकं शत्रुः । गुप्तचराणां द्वारा मया ज्ञातम् अस्ति यत् मां विपत्तिग्रस्तं

ज्ञात्वा सः आक्रमणं चिन्तयन् अस्ति इति'' इति क्रोधेन अवदत् राजा कनकाक्षः ।

''महाराज ! भवान् जयशीलस्य निष्कपटताविषये सन्देहं मा करोतु । सः यस्यकस्यचित् वा देशस्य नागरिकः स्यान्नाम । तथापि युवराज्ञी युवराजश्च आनीय दास्यते इति यत् वचनं तेन भवते दत्तम् अस्ति तत्र सः निश्चयेन अस्ति बद्धादरः । एतद्विषये सन्देहलेशोऽपि मास्तु भवतः'' इति अवदत् सिद्धसाधकः ।

सिद्धसाधकः यदा एवं वदन् आसीत् तदा नरभक्षकाणां गणे कोलाहलः आरब्धः । एतस्य कारणं ज्ञातुं सिद्धसाधकः तस्यां दिशि दृष्टिं प्रसारितवान् । तावता शूरसिंहः गणाचार्यः च धावन्तौ आगत्य उक्तवन्तौ – ''श्रीमन् ! भवादृशाः चत्वारः दशाधिकैः जलवृकराक्षसैः युद्धं कुर्वन्तः सन्ति । किं वयं तेषां साहाय्यं कर्तुम् अर्हेम ? तेन अस्माभिः आहारः प्राप्तः भवेत्'' इति ।

एतच्छ्रवणसमनन्तरम् एव अश्वम् आरुह्य उपविश्य – ''सिद्धसाधक ! प्रायः ते वैद्य-देवादयः एव । तत्र वैद्यदेवः, मम अनुजः, हंसरथस्य सारथिः, राज्ञः अङ्गरक्षकः च स्युः'' इति उक्त्वा ततः निर्गतवान् सर्पणखः ।

'जय महाकाल !' इति सकृत् उद्घोष्य सिद्धसाधकः नरवानरम् आरूढवान् । सः कनकाक्षराजम् उद्दिश्य – ''महाराज ! आदौ अस्माभिः तेभ्यः राक्षसेभ्यः अस्मदीयाः रक्षणीयाः'' इति उक्त्वा सर्पणखम् अनु-सृतवान् ।



''हे अरण्यदेव ! अस्माकं बुभुक्षां निवारयितुं भवान् एव समर्थः'' इति वदन्तः नरभक्षिणः तम् अनुसृतवन्तः ।

सर्पणखः सिद्धसाधकः च यदा तत्र गतौ तदा सर्पसखः अश्वम् आरुह्य स्वखड्गेन जलवृकाणां संहाराय प्रयतमानः आसीत् । किन्तु जलवृकाः ततः आत्मानं रक्षन्तः वैद्यदेवं, सारथिं, मङ्गलवर्माणं च सजीवं ग्रहीतुं प्रयतमानाः आसन् । यदा ते समीपम् आगताः तदा वैद्यदेवापराभिधानः देवशर्मा तान् दण्डेन निवारयन् अवदत् – ''अयि मूर्खाः, सावधानाः भवन्तु । एतस्य दण्डस्य अग्रभागे विषलिप्तं कण्टकम् अस्ति । तेन विद्धः क्षणाभ्यन्तरे मरणं प्राप्स्यति'' इति ।

अत्रान्तरे सिद्धसाधकः सर्पणखः च तत्समीपम् आगतौ । राज्ञः कनकाक्षस्य सैनिकाः जयकारं कुर्वन्तः तस्याम् एव दिशि

आगच्छन्तः आसन् । एतत् दृष्ट्वा भीताः जलवृकराक्षसाः पलायनाय उद्युक्ताः । तदा तेषां नायकः उच्चस्वरेण – ''मित्राणि ! अलं पलायनेन ! अस्माकं राज्ञः आदेशः अस्ति यत् एतान् सजीवं ग्रहीतुं न शक्तं चेत् मारयित्वा वा प्रत्यागन्तव्यम् इति । अतः मारयन्तु एतान्'' इति आदिश्य शिलागदाम् उन्नीय देवशर्मणः संहाराय अग्रे गतवान् ।

देवशर्मा एकं पदं पृष्ठतः स्थापयित्वा अवदत् – ''भोः, भवतः मरणं सन्निहितम् अस्ति । तत् निवारयितुं कः समर्थः ?'' इति । ततः सः दण्डस्थेन कण्टकेन तं विद्धवान् । अपरस्मिन् क्षणे सः जलवृक-राक्षसनायकः उच्चैः आक्रन्दनं कुर्वन् भूमौ अपतत् ।

ततः देवशर्मा दण्डम् उन्नीय उच्चस्वरेण – ''भो भोः, प्राणाः प्रियाः चेत् इतः धावन्तु । मया अन्तिमा सूचना दीयते । मायासरोवरेश्वरस्य पुत्र्याः पद्ममुख्याः, राज-कुमारस्य काञ्चनवर्मणः च कोऽपि अपायः यदि भवद्भिः क्रियते तर्हि एषोऽहं भवतां राजानं मारयिष्यामि । भवतः सर्वान् च यमसदनं प्रति प्रेषयिष्यामि । स्मरन्तु एतत् । एतत् वचनं भवतां राजानं वदन्तु'' इति अघोषयत् ।

एतत् श्रुत्वा हाहाकारं कुर्वन्तः जलवृक-राक्षसाः प्रतिनिवृत्य ततः धावितवन्तः ।

''सर्पणखः मायासरोवरेश्वरः, काञ्चन-माला, जयशीलः च च जलवृकराक्षसेभ्यः प्राप्यमाणाम् आपदम् अजानानाः माया-सरोवरं प्रति गच्छन्तः सन्ति । किं ते अपायं न स्मारणीयाः ?'' इति अपृच्छत् सर्प-सखः ।

''अवश्यं स्मारणीयाः ते । भवन्तौ सहोदरौ, हंसरथस्य सारथिः अङ्गरक्षकः च एतत् कार्यं कुर्युः । अविलम्बेन भवन्तः तत् कुर्वन्तु'' इति आदिष्टवान् देवशर्मा ।

एतम् आदेशं प्राप्य सर्पणखः सर्पसखः च जलाश्वम् आरुह्य ततः वेगेन निर्गतवन्तौ । अङ्गरक्षकः सारथिः च वृक्षाणां मध्ये गत्वा हंसरथम् आरुह्य आकाशमार्गेण गतवन्तौ । नरभक्षकाः उत्साहेन कोलाहलं कुर्वन्तः जलवृकराक्षसान् अनुसृतवन्तः ।

– *(अनुवर्तते)*



## वेताल-कथा

# नाणकफलकः वृद्धिवृक्षः

त्रिविक्रमः स्वीकृतं कार्यं त्यक्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितः । तदा शवान्तर्गतः वेतालः अवदत् - ''राजन् ! किं भवता कदाचित् वा सफलता प्राप्ता ? लक्ष्यसाधनविषये भवतः श्रद्धा निश्चयेन प्रशंसार्हा । किन्तु किं तेन ? लोके केषाञ्चित् व्यवहारः विलक्षणः भवति । ते परोपकारव्याजं दर्शयन्तः द्वेष-भावनाम् उत्पादयन्ति । तादृशः एव कश्चित् भवन्तं प्रेरितवान् स्यात् इति अहं चिन्तयामि । भवति विवेकस्य जागरणाय जडनाथनामकस्य कथां श्रावयामि,



येन मार्गायासपरिहारः अपि भवेत् । तां कथां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

भद्रपुरे मणिदीपः नाम कश्चन धनिकः निवसति स्म । तस्य पत्नी वेदवती अपि सम्पन्नपरिवारे एव जाता । तौ उभौ अपि दानशीलौ । यः साहाय्यं याचति तं 'न' इति कदाचिदपि न वदति स्म मणिदीपः । यः गृहम् आगच्छति तं मातृवात्सल्येन सत्करोति स्म वेदवती ।

उपभुज्यमाना सम्पत् दिने दिने क्षीणतां याति इति वचनं श्रूयते खलु ? यावत् मणिदीपस्य पुत्रः गुणदीपः प्राप्तवयस्कः जातः तावता तत्कुटुम्बस्य सम्पत्तिः गृह-मात्ररूपा जाता आसीत् ।

गुणदीपः तु न जानाति स्म एव यत् गृहस्य सम्पत्तिः कियती इति । तस्यैव नगरस्य जडनाथनामकेन मित्रेण सह सः वैद्यकीय-शिक्षणं प्राप्तुं सुदूरप्रदेशं गतवान् । तयोः उभयोः अपि अध्ययनाय यत् धनम् आवश्यकं तत् प्रेषयति स्म मणिदीपः नियत-तया । विद्याभ्यासं समाप्य गुणदीपः गृहं प्रत्यागतवान् । तदा तेन ज्ञातं यत् गृहस्य वास्तविकी साम्पत्तिकी स्थितिः का इति ।

''पूर्वजैः या सम्पत्तिः सङ्गृहीता आसीत् सा विना विवेचनं व्ययिता भवता । इदानीं मम हस्ते भिक्षापात्रम् आगतम् । एतादृश्यां स्थितौ किं करणीयम् इति न ज्ञायते'' इति क्रोधेन पितरम् अवदत् गुणनाथः ।

''पुत्र ! सम्पत्तिः न स्थिरा । अस्माकं सद्गुणाः एव अस्मान् रक्षन्ति, न तु सम्पत्ति-मात्रम् । भवतः पित्रा यत् कृतं तत्र ममापि सहमतिः आसीत् । पित्रा कृतम् अनुचितम् इति यदि भवान् चिन्तयति तर्हि चिन्तयतु यत् आवाम् उभौ अपि दोषिणौ इति । इदानीम् अपि परावलम्बनं तु न प्राप्तम् अस्माभिः । वासाय गृहम् अस्ति एव । भवान् वैद्यवृत्तेः आरम्भं यदि करोति तर्हि भवता उत्तमः आयः प्राप्येत'' इति उक्तवती माता वेदवती ।

गुणदीपः वृत्तिजीवनम् आरब्धवान् । ततः यः आयः प्राप्यते तावता सन्तुष्टः न आसीत् सः । अत्र कारणं जडनाथः । सः तु वृत्तेः आरम्भस्य अनन्तरं वर्षाभ्यन्तरे प्रभूतं धनं सम्पादितवान् आसीत् । तदीया कीर्तिः दिने दिने वर्धमाना आसीत् । जनाः वदन्ति स्म यत् एतादृशः उत्तमः वैद्यः अस्माभिः इतः पूर्वं न दृष्टः एव इति । जडनाथस्य

औषधं शवम् अपि उज्जीवयितुम् अर्हति इति ते प्रशंसन्ति स्म । दूरप्रदेशेभ्यः अपि जनाः चिकित्सार्थं तत्समीपम् आगच्छन्ति स्म । अतः तदीया सम्पत्तिः प्रवृद्धा ।



''भवता दत्तं धनम् उपयुज्य एव जडनाथः वैद्यविद्याम् अभ्यस्तवान् । अद्य च सः भवत्पुत्रस्य मम प्रतिस्पर्धी सन् मम आयस्य हानिं कल्पयति । मम श्रमः व्यर्थः जायमानः अस्ति'' इति पितरम् अवदत् गुणदीपः ।

''वत्स ! भवतः आयः न क्षीणः । वैद्यवृत्तिः सेवाप्रधाना । भवान् स्ववृत्त्या जनानां साहाय्यं करोतु । तदा जनाः भवन्तं श्रेष्ठं भावयन्ति । भवति आदरं च प्रदर्शयन्ति । भवान् जीवने अभावभावं यत् अनुभवति तत् तु भ्रममूलम् एव'' इति पुत्रं बोधितवान् धनदीपः ।

किन्तु गुणदीपस्य समग्रा दृष्टिः धन-सम्पादने एव । महतः प्रयासस्य अनन्तरम् अपि तदीयः आयः विशेषतः न प्रवृद्धः ।

तस्मिन् एव नगरे महासेनः नाम कश्चन तण्डुलवणिक् निवसति स्म । रत्नमाला तस्य एकमात्रपुत्री । प्राप्तवयस्कायाः तस्याः निमित्तं योग्यस्य वरस्य अन्वेषणे मग्नः आसीत् सः । स्वस्य जामातरं गृहे एव स्थापयित्वा तस्मै वाणिज्यव्यवहारं समर्पयितुम् इच्छति स्म सः ।

एतदभ्यन्तरे गुणदीपे तस्य दृष्टिः पतिता । कदाचित् सः गुणदीपेन मिलित्वा अवदत् - ''वत्स ! भवतः परिवारम् अहं सम्यक् जानामि । भवत्पूर्वजाः दाने शूराः । तैः महती सम्पत्तिः अपि अर्जिता आसीत् । लक्ष्मीदेव्याः कृपादृष्टिः भवत्पूर्वजेषु विशेषतः आसीत् । किन्तु भवतः मतापितरौ मन्दभाग्यौ । ताभ्यां सह भवान् निवसति चेत् भवतः स्थितिः कदापि उत्तमा न भवेत् । प्रत्युत भवान् अपि कदाचित् अकिञ्चनः भवेत् । अतः भवान् मम पुत्रीं परिणीय मम गृहे एव वसतु । भवतः मातापितरौ पार्थक्येन वसतां नाम'' इति ।

एषः एव अंशः विविधैः प्रकारैः पुनः पुनः बोधितः तेन । गुणदीपे एतस्य वचनस्य विशेषपरिणामः जातः । रत्नमालायाः सौन्दर्यम् अपि तदीयं चित्तम् आकर्षति स्म ।

गुणदीपः रत्नमालां परिणीय श्वशुरगृहे एव वासम् आरब्धवान् । अत्रान्तरे जडनाथेन मणिदीपस्य गृहस्य दुरवस्था श्रुता । सः मणिदीपस्य समीपं यदा गतः तदा



मणिदीपः अवदत् - ''आवाम् अत्र सुखेन स्वः । आवयोः पुत्रः इच्छति यत् आवाभ्यां तस्य गृहे वासः करणीयः इति । किन्तु तदीयश्वशुरगृहे वासं न इच्छावः आवाम् । एतस्मात् गृहात् अन्यत्र वासः अस्मभ्यं न रोचते । अतः इतः गन्तुं न इच्छावः आवाम्'' इति ।

जडनाथः किञ्चित्कालं विचिन्त्य अवदत् - ''अहं कश्चित् स्वार्थं मनसि निधाय अत्र आगतः । भवतोः गृहस्य पृष्ठतः कश्चन वृक्षः अस्ति । तस्य नाम किम् इति कोऽपि न जानाति । तस्य वृक्षस्य फलात् अपूर्वम् औषधं निर्मातुं शक्यम् । एतत् रहस्यम् एषु दिनेषु मया ज्ञातम् अस्ति । एषः वृक्षः आवर्षं फलं ददाति । एकैकस्य फलस्य मूल्यं दश सुवर्णनाणकात्मकं स्यात् । किन्तु तावत् मूल्यम् अहं दातुं न शक्नोमि । यदि भवान् मह्यं प्रतिदिनम् एकं फलं दद्यात् तर्हि अहं भवते प्रतिफलम् एकं सुवर्णनाणकं दास्यामि । किन्तु एतदर्थं भवता एकं पत्रं दातव्यं यत् एतानि फलानि अन्यस्मै न विक्रीयन्ते, दिने एकं फलं च मह्यं दास्यते इति'' इति ।

मणिदीपः क्षणकालं विचिन्त्य अवदत् - ''यावत् भवान् न उक्तवान् तावत् एतस्य वृक्षस्य फलानां महत्त्वम् अहम् एव न जानामि स्म । भवता सूचितेन मूल्येन फलानि दातुम् अहं सिद्धः अस्मि । किन्तु एतदर्थं पत्रं किमर्थं दातव्यम् इति तु न ज्ञातं मया'' इति ।

''महोदय ! एतेषां फलानां महत्त्वं ज्ञातं चेत् महान् अपायः सम्भवेत् । बहवः तेषां क्रयणे मतिं कुर्युः । यदि तेषां फलानाम् उपयोगः योग्येन क्रमेण क्रियते तर्हि एतानि लाभाय भवेयुः । अनुचितेन क्रमेण उपयोगः कृतः चेत् तानि प्राणहराणि अपि भवेयुः । मादृशस्य हस्तं गतानाम् तेषां दुरुपयोगः न भवेत् । यदि भवान् एतेषाम् अधिकारं लिखितरूपेण मह्यं दद्यात् तर्हि अग्रे कोऽपि तं प्राप्तुं भवन्तं न पीडयेत् । अतः मया तथा उक्तम्'' इति अवदत् जडनाथः ।

मणिदीपः जडनाथस्य वचनं पालयन् फलानाम् उपयोगाधिकारं पत्रदानपुरस्सरं जडनाथाय समर्पितवान् । तस्मात् दिनात् मणिदीपस्य आर्थिकस्थितौ विशेषपरिवर्तनं जातम् । सः सुखेन जीवनम् आरब्धवान् । यथाशक्ति परोपकारम् अपि कृतवान् ।

पितुः आर्थिकस्थितिः उत्तमा जाता अस्ति इति वार्ता गुणदीपेन श्रुता । किन्तु

एतस्य कारणं किम् इति तेन न ज्ञातम् । अतः सः पित्रा मिलित्वा स्वभागं प्रार्थितवान् । तदा मणिदीपः फलानां विषयम् उक्तवान् अनन्यगतिकतया । एतत् श्रुत्वा गुणदीपः धावन् वृक्षस्य समीपं गतवान् । वृक्षे असंख्यानि फलानि आसन् । सः पितरं क्रोधेन उक्तवान् - ''भवता एतस्य वृक्षस्य रहस्यं गोपितम् । मम अनुमतिम् अप्राप्य एव फलानाम् उपयोगाधिकारः कस्मैचित् लेख-पुरस्सरं प्रदत्तः भवता । एतत् तु महत् अन्याय्यम् । स्वभागं प्राप्तुम् अहम् उच्चाधिकारिणः समीपम् अभियोगं नेष्यामि'' इति ।



मणिदीपः एतादृशं विवादं न इच्छति स्म । अतः सः जडनाथाय वार्तां प्रेषितवान् । प्रवृत्तं सर्वं श्रुत्वा जडनाथः अवदत् - ''गुणदीपस्य कथनं सयुक्तिकम् अस्ति । अहम् एकं परिहारोपायं सूचयामि । एतस्य वृक्षस्य चतुस्सहस्त्रं फलानि अहं स्वीकरिष्यामि । प्रतिफलरूपेण अहं भवते प्रतिदिनम् एकं सुवर्णनाणकं दास्यामि यावत् सः जीवति तावत् । वृक्षस्य सर्वाधिकार-प्राप्त्यर्थं गुणदीपः मह्यं द्वादशसहस्त्रं सुवर्ण-नाणकानि दद्यात्'' इति ।

गुणदीपः एतं प्रस्तावम् अङ्गीकृतवान् । ततः सः तस्य वृक्षस्य फलानां विक्रयणाय प्रयासं कृतवान् । तत् फलं परीक्ष्य वैद्याः उक्तवन्तः यत् एतस्मिन् फले औषधीयगुणः कोऽपि नास्ति इति । एतत् श्रुत्वा गुणदीपः नितरां निराशः जातः । सः जडनाथसमीपं गत्वा अवदत् - ''यावत् मूल्यं भवान् दातुम् इच्छति तावत् दत्त्वा एतानि सर्वाणि फलानि भवान् एव नयतु'' इति ।

तदा जडनाथः हसन् उक्तवान् - ''एतानि प्रयोजनरहितानि फलानि स्वीकृत्य मया किं वा करणीयम् ?'' इति ।

''एतानि निष्प्रयोजकानि कथं स्युः ? भवान् एव एतेषु एकैकस्मै फलाय एकैकं सुर्णनाणकं खलु ददाति स्म ?'' इति अवदत् गुणदीपः ।

''भवतः पितृपादेभ्यः क्रीतानि एव तानि मूल्यम् अर्हन्ति । भवतः गृहस्य पृष्ठतः विद्यमानः वृक्षः नाणकफलकः वृद्धिवृक्षः । भवतः पित्रा कृतः उपकारः एव एतस्य मूलधनम् । तस्य वृद्धिरूपेण प्राप्यन्ते नाणकानि'' इति अवदत् जडनाथः ।

तदीयानि गूढार्थगर्भितानि वचनानि श्रुतवतः गुणदीपस्य मुखं विवर्णं जातम् ।

सः शिरः अवनमय्य ततः निर्गतवान् ।

वेतालः एवं कथां समाप्य अवदत् – ''राजन् ! वैद्यविद्यां समाप्य प्रत्यागतवतः जडदीपस्य व्यवहारः मणिदीपपरिवारविषये विलक्षणः आसीत् । सः जानाति स्म यत् गुणदीपः मातापित्रोः विषये आदरवान् न आसीत्, ताभ्यां सह वासम् अपि सः न इच्छति इति । तथापि तस्य परिष्काराय किमर्थं प्रयत्नः न कृतः तेन ? मणिदीप-कारणतः सः वैद्यः जातः । तथापि तस्य विषये न्याय्यः व्यवहारः तेन न कृतः इति भाति । एवं ननु ? तस्य वृक्षस्य फलानि वस्तुतः न औषधीयगुणोपेतानि । तथापि तानि विशिष्टानि इति किमर्थम् उक्तवान् जडनाथः ? जडनाथस्य सर्वोऽपि व्यवहारः विलक्षणः निगूढः च खलु ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् – ''जडनाथस्य व्यवहारे विलक्षणता निगूढता वा कापि नास्ति । सः लोकज्ञानवान् विवेकी । केन सह कथं व्यवहरणीयम् इति सः जानाति । यद्यपि गुणदीपः मातापितरौ परित्यज्य श्वशुरगृहे वासम् आरब्धवान्, तथापि पुत्रस्य अगौरवं कल्पयितुम् अनिच्छन्तौ तौ उक्तवन्तौ यत् सः आवां स्वसमीपे वासाय निमन्त्रयते, किन्तु आवाम् एव तत्र न गतौ इति । एतत् जडनाथेन अवगतम् । धनं दत्तं चेत् अभिमानधनौ तौ न स्वीकुरुतः इति सः जानाति स्म । अतः सः फलानां महत्त्वम् अस्ति इति वदन् धनदानम् आरब्धवान् । एवं तेन उपकृतवतः प्रत्युपकारः कृतः । किन्तु गुणदीपेन यदा उक्तं यत् यावत् इच्छति तावत् मूल्यं दत्त्वा भवान् एव एतानि फलानि क्रीणातु इति, तदा जडनाथेन उक्तम् – 'भवतः पितृतः स्वीकरणात् एव तेषां मूल्यम्, अन्यथा न' इति । एतत् अर्थगर्भितं वचनं श्रुत्वा वास्तविकताम् अवगतवान् गुणदीपः – 'मातापित्रोः परोपकारस्य कियत् मूल्यम् अस्ति' इति । तस्मात् सः मौनेन प्रतिगतवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।








## अतिविशालं भित्तिचित्रम्

केरलराज्ये त्रिशूरुजनपदे कालडीक्षेत्रे स्थितस्य श्रीशङ्करविश्वविद्यालयस्य १२०० पाददैर्घ्ययुता भित्तिः चित्रैः अलङ्कृतः अस्ति । पञ्चपादौन्नत्ययुते तस्मिन् चित्रे गुरुः शिष्यं सत्य-त्रेता-द्वापर-कलियुगानि क्रमेण दर्शयति । तत्र रामायणं, महाभारतं, शाकुन्तलं, रघुवंशः, मेघसन्देशः, भरतस्य १०८ करणानि, आदिशङ्करस्य जीवनम् इत्यादयः चित्ररूपेण निरूपिताः सन्ति । वर्षत्रयात्मकस्य परिश्रमस्य अनन्तरं तच्च चित्रं १९९८ तमे वर्षे पूर्णतां गतम् । गिन्नीसुपुस्तके एतत् कार्यम् उल्लेखं प्राप्तवत् अस्ति ।

## ग्रामस्थाः सर्वे शाकाहारिणः

तस्मिन् ग्रामे इदानीं सर्वे अपि शाकाहारिणः एव । ओरिस्साराज्ये अस्ति तत् । तस्मिन् ग्रामे न कोऽपि परिवारः मीनं मांसं वा खादति । ते सर्वे शाकाहारिणः सञ्जाताः सन्ति । पूर्व-ओरिस्साराज्ये धेङ्कानलूतः ५० कि.मी. दूरे स्थितः 'बेण्टासालिया' एव सः ग्रामः । सामान्यदर्शनेन अत्र न किमपि वैशिष्ट्यं दृश्यते । अत्रत्याः सर्वे वैष्णव-मतानुयायिनः । संन्यासिनः अच्युतानन्दस्य भक्ताः । आ बहोः कालतः ते सन्ति वैष्णवाः । ते शान्ति-जीवनं यापयन्तः सन्ति । ते दीर्घकालं जीवितुम् इच्छन्ति । प्राकृतिकपीडायाः पात्रतां न गताः ते । मानवाः पशवः च शान्तिमयं जीवनं यापयन्तः सन्ति तत्र ।



पुराणकथावली - १८

# प्रवाहविरुद्धं गमनम्



आ बहोः कालात् हिमालयस्य मूलभागे स्थितं हरिद्वारं पवित्रतीर्थक्षेत्रत्वेन परिगणितम् अस्ति । तत्र बहवः योगिनः गुरवः च निवसन्ति । तेषां बहूनाम् आश्रमः अपि अस्ति तत्र ।

कश्चन धनसम्पन्नः वणिक् एतत् क्षेत्रं प्रति तदा तदा आगच्छति स्म । सः कञ्चित् वृद्धं योगिनं स्वगुरुत्वेन स्वीकृतवान् आसीत् । सः वृद्धः योगी महाबुद्धिमत्त्वेन ख्यातः आसीत् । यदा वाणिज्ये हानिः सम्भवति, यदा वाणिज्य-सहभागिषु मतिभेदः उत्पद्यते, केनचित् कारणेन पत्नीपुत्रादयः यदा असन्तुष्टाः भवन्ति, तदा सर्वदा सः वणिक् हरिद्वारं प्रति धावति स्म । गुरुः तं प्रीत्या स्वागतीकरोति स्म । तस्मिन् आश्रमे, गुरोः उपस्थितौ सः वणिक् शान्तिं प्राप्नोति स्म ।

गुरुः यदा भक्तान् उपदिशति तदा तस्य पार्श्वे उपवेशनं वणिजे विशेषतः रोचते स्म । गुरोः उपदेशवाक्यानां श्रवणं तस्य प्रियम् आसीत् । गुरुः यद्यत् वदति तत्सर्वं वणिजा अवगम्यन्ते स्म इति न । यत् अवगतं तद्विषये अपि क्वचित् तस्य विप्रतिपत्तयः आसन् एव ।

यदा वणिक् स्वसमस्यां निवेदयति तदा गुरुः वदति स्म - ''वत्स ! यदि भवान्

मनसः शान्तिम् इच्छति तर्हि भगवन्तं पूर्णतः शरणं गच्छेत्'' इति ।

किन्तु वणिजः प्रश्नः आसीत् - 'मम वाणिज्यव्यवहारस्य भगवतः शरणागतेः च कः सम्बन्धः ? यदि मम वस्तूनि कदाचित् चोरितानि भवेयुः तर्हि किं शरणागतिः माम् उपकुर्यात् ?' इति ।

''यदा कश्चित् मां पीडयति तदा मया आरक्षकालयः न्यायालयः वा गन्तव्यः, उत भगवान् प्रार्थनीयः ? एतादृशेषु विषयेषु किं भगवान् मम साहाय्यं करोति ?'' इति गुरुं पृच्छति स्म सः । एषः एव प्रश्नः विभिन्नैः प्रकारैः पृच्छ्यते स्म वणिजा । गुरोः उत्तरम् अपि यथापूर्वं तदेव भवति स्म । क्वचित् उत्तरकथनप्रकारः अन्यः भवति स्म ।

गुरोः कथनम् आसीत्- ''ये भवतः वस्तूनि अपहृतवन्तः, ये वा भवन्तं पीडितवन्तः, तेषां दण्डनं कारयेत् भवान् आरक्षकालयं, न्यायालयं वा शरणं गच्छन् । नष्टं वस्तु भवता प्रतिप्राप्येत अपि । किन्तु एतावता भवता मनश्शान्तिः न प्राप्यते । अन्या काचित् लघुः समस्या उद्भवन्ती भवतः मनः पीडयेत् एव । अतः आवश्यकतानुगुणं भवान् वाणिज्यं करोतु न्याय्येन मार्गेण । किन्तु मानसिकी शान्तिः एव यदि इष्यते तर्हि भवता भगवान् शरणं गन्तव्यः एव । पूर्णा शरणागतिः न सिद्धा चेदपि तदर्थं प्रयासः तु लाभाय एव । किम् उत्तमं, किम् अनुत्तमम् इति ज्ञानं भवति ततः । एतत् लाभकरम् एव खलु भवतः ?'' इति ।

कदाचित् रात्रौ गुरुणा सह एतद्विषये सुदीर्घां चर्चां कृतवान् वणिक् । गुरोः सहना कदापि नष्टा न भवति स्म । किन्तु वणिजा सह प्रवृत्तया चर्चया सः अवगतवान् यत् वणिजं तत्त्वम् अवगमयितुं न शक्यम् इति । अतः सः मौनम् आश्रितवान् । तावता मध्यरात्रः आसन्नः आसीत् । मत्कारणतः गुरोः निद्रानाशः जातः



इति चिन्तयन् वणिक् गुरुं क्षमां सम्प्रार्थ्य शयनाय स्वशय्यां प्रति गतवान् ।

उषःकाले गुरुः वणिजम् उत्थापितवान्, 'मया सह आगच्छतु' इति सूचितवान् च । वणिक् प्रतिवचनं किमपि अवदन् गुरुम् अनुसृतवान् । गतेषु केषुचित् दिनेषु निरन्तरवृष्टिः आसीत् । तस्मिन् दिने अपि लघुः वृष्टिः आसीत् एव । सर्वं शान्तम् आसीत् । गुरुः वणिक् च गङ्गातीरं प्राप्तवन्तौ । गङ्गायाः प्रवाहः महता वेगेन आसीत् । प्रवाहशब्दः भयं जनयति स्म इव ।

'गुरुः माम् अत्र आनीय किं वा कर्तुम् इच्छति' इति वणिजा न अवगतम् ।

गङ्गायां कश्चन महागजः प्रवाहेण नीयमानः आसीत् । सः गजः तीरं प्रति आगन्तुं महान्तं प्रयासं कुर्वन् आसीत् । किन्तु न शक्नोति स्म सः तथा कर्तुम् । यतः प्रवाहः तम् अग्रे अग्रे नयति स्म । तं गजं प्रदर्शयन् गुरुः अवदत् - ''तत्र पश्यतु तावत्'' इति ।

ततः ''अत्र पश्यतु'' इति वदन् गुरुः हस्तसङ्केतेन कञ्चन मीनं प्रदर्शितवान् । सः मीनः प्रवाहविरुद्धम् अनुतीरं सुखेन सञ्चरति स्म ।

''एतयोः उभयोः दर्शनात् किम् अवगतं भवता ? सः महाकारकः गजः प्रवाहविरुद्धं गन्तुम् अशक्नुवन् अनिच्छन् अपि प्रवाहेण नीयमानः अस्ति । किन्तु अयं लघुः जीवी मीनः प्रवाहे लीलया सञ्चरति । यतः एषः प्रवाहीयः एव जातः अस्ति । महाप्रवाहः अपि एतं न पीडयति । यदा भवान् भगवन्तं पूर्णतः शरणं गच्छति तदा भवान् तस्मिन् अन्तर्भूतः भवति । यदा भवान् भगवतः शान्तिं न नाशयति तदा भवतः अपि शान्तिनाशः न भवति । एषः एव मनःशान्तेः उपायः'' इति वदन् गुरुः वणिजः स्कन्धे प्रीत्या हस्तं स्थापितवान् ।

''मया इदानीं शान्तितत्त्वम् अवगतं श्रीमन् । अहम् अनुगृहीतः अस्मि'' इति शान्तेन स्वरेण अवदत् वणिक् ।



# वार्ताविशेषः

## मेडोनायाः पुस्तकानि बालेभ्यः



पाप्सङ्गीतीया प्रसिद्धा गायिका मेडेना बाल-साहित्यनिर्मातॄणां गणम् एषु दिनेषु प्रविष्टा अस्ति । तया पञ्च पुस्तकानि लिख्यमानानि सन्ति । तस्याः प्रथमस्य पुस्तकस्य नाम 'इंग्लीष् रोसस्' इति । सप्टम्बर्मासे तस्य लोकार्पणम् । तस्य प्रकाशनसंस्था पेंगूयन् वदति यत् विविधसंस्कृतियुक्तैः बालैः एतत् निश्चयेन प्रशस्यते, तथैव इदानीं यानि जनप्रियाणि सन्ति तानि हेरीपाटर्सरणीयानि पुस्तकानि अपि अतिशेते इति । मेडोनायाः पुस्तकानि ऊनसप्तवर्षीयान् मनसि निधाय रचितानि । प्रपञ्चस्य विविधभागीयैः चित्रकारैः एतस्य पुस्तकस्य निमित्तं चित्राणि रचितानि ।

## भारते ज्यूजनाः नावशिष्टाः

भारतस्थः ज्यूजातीयः अन्तिमः परिवारः एषु दिनेषु भारतं परित्यज्य जातिबान्धवभूमिम् इस्रेल्देशं प्रति गतः । जोसेफ्सिमोनः, तस्य पत्नी यहुदिता, बालौ साम्-सुसनौ च षट्शतवर्षेभ्यः पूर्वं निर्मितस्य प्राचीनस्य 'सिनेगाग्'भवनस्य पुरतः क्षणकालं स्थितवन्तः, ततः परिवृत्य कार्यानम् आरुह्य गताः च । केरले परवूरुनगरे अस्ति तत् सिनेगाग् । यदा सः परिवारः ततः प्रस्थितः तदा तेन परिवारेण सह आ ५० वर्षेभ्यः वासं कृतवन्तः जनाः विषण्णवदनाः सन्तः शुभप्रयाणम् आशंसितवन्तः । यदा अन्ये ज्यू-परिवाराः एकैकशः निर्गताः तदा जोसेफ्परिवारः एकलः जातः । उत्सवदिनेषु पारस्परिकाणाम् आचाराणाम् समाचरणाय अन्ये न लभ्यन्ते स्म । बालौ अपि समानाचारवतां बालानां सहवासेन वञ्चितौ स्तः इति मातापितृभ्याम् अवगतम् । अतः तौ स्वजातिबान्धवैः सह वासाय ततः निर्गतौ बालाभ्यां सह । इदानीं तत्रत्यं 'सिनेगाग्'भवनं राष्ट्रियस्मारकत्वेन परिगणितम् अस्ति ।



# उत्तराञ्चलराज्यीया जानपदकथा

उत्तराञ्चलं भारते नूतनतया निर्मितेषु राज्येषु अन्यतमम् । एतस्य राजधानी डेहराडून् । उत्तरप्रदेशस्य १३ जनपदानि पृथक् कृत्वा २००० तमवर्षस्य सप्टम्बर्मासे एतत् राज्यं निर्मितम् ।

अत्रत्या भूमिः पर्वतमयी । नैसर्गिकसौन्दर्यं प्रशान्तवातावरणं च अत्र प्रभूतम् अस्ति । एषः प्रदेशः देवभूमिः इत्येव प्रख्यातः अस्ति । यतः अत्र देवानां यात्रास्थानानां च आधिक्यम् अस्ति । अत्रत्यानि यात्रास्थानानि यथा - केदारनाथः, बदरीनाथः, गङ्गोत्री, यमुनोत्री इत्यादयः ।

एतस्य राज्यस्य पूर्वभागे नेपालदेशः अस्ति । हिमालयपर्वताः उत्तरभागे चीनादेशम् उत्तराञ्चलतः पृथक् कुर्वन्ति । हरियाणाहिमाचलप्रदेशराज्ये अनुक्रमेण एतस्य राज्यस्य पश्चिमे पश्चिमोत्तरे च स्तः । एतस्य राज्यस्य बहुभागः पर्वतमयः असमः च । १०प्रतिशतमात्रभागः समभूमिः अस्ति अत्र । गङ्गा-यमुना-भागीरथी-अलकानन्द-प्रभृतयः बह्व्यः नद्यः अस्मिन् राज्ये एव उद्भूताः ।

एतस्य राज्यस्य विस्तीर्णता ५५,८४५ कि.मीटर्मिता । अत्रत्या जनसंख्या ८,४७९,५६२ मिता । हिन्दी, गढवाली, कुमाँवी च अत्रत्याः प्रधानाः भाषाः ।

## सर्वं मार्जारकारणतः

पौरीसमीपस्थायाम् उपत्यकायाम् एकस्मिन् लघुनि कुटीरे वृद्धदम्पती निवसतः स्म । तयोः नेगिनामकः एकः पुत्रः आसीत् । नेगिः चतुरः बालकः न । सः अतीव मुग्धः । मुग्धतायाः कारणतः तस्य व्यवहारः अत्यन्तं मृदुः भवति स्म । तस्य व्यवहारेण आकर्षकनेत्राभ्यां च सर्वेऽपि आकृष्टाः भवन्ति स्म ।

तस्य गृहस्य समीपे काचित् लघुनदी प्रवहति स्म । नेगिः बहुधा तस्याः तीरे उपविश्य



वेणुवादने निरतः भवति स्म । पार्श्वे मेषाः चरन्ति स्म । सूर्यप्रकाशकारणतः मत्स्याः रजतवर्णेन प्रकाशन्ते स्म । तत्रत्यप्राणिनां पक्षिणां च नेगेः उपस्थितेः अभ्यासः जातः आसीत् । अतः ते तस्मात् भीताः न भवन्ति स्म ।

वृद्धदम्पती नेगेः विषये बहु चिन्तयतः स्म । 'आवयोः मरणानन्तरं नेगिः स्वस्य योगक्षेमनिर्वहणे स्वावलम्बी न स्यात्' इति तयोः चिन्ता आसीत् ।

कदाचित् कुक्कुटानाम् आवासतः अण्डानि सङ्गृह्णती वृद्धा पतिम् उद्दिश्य– "अग्रे नेगिः कथं भवेत् ? तस्य योगक्षेमं कः पश्येत् ?" इति पृष्टवती ।

तस्याः पतिः अजानां दोहनं कुर्वन् आसीत् । सः पत्न्याः वचनं श्रुत्वा अपि किमपि उत्तरं न दत्तवान् । खिन्नस्य तस्य ललाटे चिन्तारेखाः दृष्टाः । हिमाच्छादित-पर्वतानां दिशि सः दृष्टिं प्रसारितवान् । बहु-दूरतः खातेभ्यः शीतलवायुः वाति स्म । तेन नेगेः वेणोः नादः अपि श्रुतः ।

तद्दिने रात्रौ वृद्धः निद्रां न प्राप्तवान् । पुनः पुनः सः पार्श्वपरिवर्तनं करोति स्म । सः उषसि एव उत्थाय शयानं पुत्रम् उत्थापयन् – "नेगे, उत्तिष्ठतु । भवान् किञ्चित् वक्तव्यः अस्ति मया" इति उक्तवान् ।

नेगिः उत्थाय निद्रायाः निवारणार्थं नेत्रे सम्यक् मार्जितवान् । सूर्योदयः जायमानः आसीत् । पर्वतेषु जीवसञ्चारः आरब्धः आसीत् । कुक्कुटस्य रवेण सह वृक्षेषु पक्षिणां कलरवः अपि आरब्धः ।



नेगिः पितरम् अनुसरन् मेषाणाम् आवासं प्राप्तवान् । वृद्धः एकां मेषां, भूतियनामकं मेषपालकशुनकं च बहिः आनीतवान् । नेगिः मेषां दृष्टवान् । सा तु तस्य मातुः प्रिया बुल्बुलामेषा आसीत् । बुल्बुलामेषायाः कण्ठे लघुघण्टा आसीत् । सा सुन्दरी चटुला च । नेगेः माता तस्यै स्वादूनि खाद्यानि स्वहस्तेन एव ददाति स्म ।

"पुत्र ! भवान् एतां बुल्बुलामेषां नीत्वा भाग्यपरीक्षणं करोतु । किन्तु एकः नियमः अस्ति । भवता एतस्याः विक्रयणं न करणीयम् । मारयित्वा मांसस्यापि विक्रयणं न करणीयम् । अन्यच्च, यदा भवान् प्रत्यागमिष्यति तदा भवतः हस्ते किञ्चित् धनं स्यात्" इति उक्तवान् ।

नेगिः अङ्गीकारपूर्वकं शिरः चालितवान् । अनन्तरं मातापितरौ प्रणम्य सः मेषां स्वीकृत्य गृहात् निर्गतवान् । लघुपर्वतम् आरुह्य खातम्



अतिक्रान्तवान् । रसमयानि पर्णाणि आस्वद-माना बुल्बुला तम् अनुसृतवती । भूतियः तां रक्षन् अग्रे चलितुं प्रेरयति स्म ।

आदिनं नेगिः पर्वतमार्गम् आश्रित्य गच्छन् आसीत् । यदा बुभुक्षा भवति तदा सः अरण्यस्थानि फलानि अवचित्य खादति स्म । पिपासा भवति चेत् पर्वतस्थेभ्यः जल-स्रोतोभ्यः शीतलं जलं पिबति स्म ।

सायङ्कालसमये पर्वतः अतिक्रान्तप्रायः आसीत् । सूर्यास्तः जायमानः आसीत् । नेगिः कस्यचित् देवदारुवृक्षस्य काण्डम् आलम्ब्य विश्रान्तिम् अनुभवन् उपविष्टवान् । सः पार्श्वे उपविष्टां बुल्बुलां दृष्टवान् । सा रोमन्थनं कुर्वती आसीत् । तां पश्यन् नेगिः - ''पित्रा उक्तं विचित्रं खलु । अहं तस्य कथनस्य तात्पर्यम् एव न अवगतवान् । भवत्याः, भवन्मांसस्य वा विक्रयणम् अकृत्वा कथं वा अहं धनं सम्पादयानि ?'' इति स्वगतम् इव उक्तवान् ।

नेगिः प्रीत्या भूतियं शिरसि ताडितवान् । यतः भूतियः जिह्वां प्रसार्य स्वस्य लालनम् इच्छन् नेगेः हस्तं लेढि स्म । 'यदि शक्यं अहम् अपि भवतः हस्तं लिह्याम्' इति सूचनार्थम् इव बुल्बुला अपि 'ब्याऽऽ' इति शब्दं कृतवती ।

नेगिः भूतिय-बुलबुलयोः मध्ये स्थलं कल्पयित्वा तृणानाम् उपरि शयितवान् । रात्रेः शैत्ये अधिके सत्यपि तेन तत्रैव शयनं करणीयम् आसीत् । परेद्यवि प्रातः पक्षिणां कलरवैः सः जागरितः अभवत् । यदा सः नेत्रे उद्घाट्य दृष्टवान् तदा भूतियः वृक्षे उपविष्टवन्तं मार्जारं भाययन् आसीत् ।

मार्जारः करुणस्वरेण 'मियाँव्' इति क्रन्दति स्म । तदा अधः भूतियः पुच्छचालने निरतः आसीत् । नेगिः कुतूहलेन अग्रे किं भवेत् इति अवलोकनं करोति स्म । तदा एव वृक्षाणां पृष्ठभागतः सम्भाषमाणे द्वे युवती तत्र आगते ।

नेगिः आश्चर्येण ते दृष्टवान् । ते युवती अपि तम् आश्चर्येण दृष्टवत्यौ । तस्मिन् समये ते कमपि न निरीक्षितवत्यौ आस्ताम् इत्यतः आश्चर्येण तत्रैव स्थितवत्यौ । तावति काले कनीयसी युवतिः वृक्षस्थं मार्जारं दृष्ट्वा तस्यां दिशि धावितवती ।

यदा सा त्वरया गत्वा मार्जारं गृहीतवती तदा नेगिः अपि त्वरया स्वस्य शुनकम् आकृष्य गृहीतवान् ।

ज्येष्ठा शुनकस्य समीपं गत्वा तस्य शिरः प्रीत्या आमृष्टवती । ''अत्र कोऽपि भवेत् इति आवां न निरीक्षितवत्यौ । भवान् अत्र एकाकी तिष्ठति किम् ?'' इति पृष्टवती सा ।

तदा नेगिः – ''न, मया सह बुल्बुला भूतियः च स्तः'' इति उक्तवान् ।

पुनः सा – ''भवतः नाम किम् ?'' इति पृष्टवती ।

नेगिः स्वस्य नाम उक्तवान् ।

तन्मध्ये नेगिः ते युवती पश्यन् आसीत् । उभे अपि सुन्दर्यौ । नेगिः दर्शनेनैव ज्येष्ठाम् इष्टवान् । यत् सा हसति स्म, सः हासः विशिष्टः भवति स्म । तस्याः कपोलद्वयेऽपि द्वौ कपोलोर्मी भवतः स्म । ''मम नाम शमा'' इति उक्तवती सा । अनन्तरम् अनुजां प्रदर्श्य सा उक्तवती – ''एषा नीरजा'' इति ।

'शमा नाम सहना, नीरजा नाम कमलम् । उभयोः अपि युक्तं नाम' इति नेगिः चिन्तितवान् ।

नेगिः ताभ्यां सह तयोः गृहं गतवान् । ततः एकं पात्रं स्वीकृत्य नेगिः मेषायाः दोहनं कृतवान् । अनन्तरं त्रयः अपि अल्पाहारं कर्तुम् उपविष्टवन्तः । अल्पाहारार्थम् आलुकरोटिका क्षीरं च आसीत् ।

कालः अतीतः । अत्र अधिककालं यावत् स्थातुं न शक्यते इति नेगिः ज्ञातवान् । यतः तेन धनसम्पादनस्य मार्गः अन्वेष्टव्यः एव आसीत् । सः खिन्नः अभवत् । खिन्नतायाः भावः तस्य मुखे स्फुटं दृश्यते स्म । 'एषः दुःखितः अस्ति' इति शमा झटिति अवगतवती ।

''भोः नेगिवर्य ! भवान् किमर्थं खिन्नः अस्ति ?'' इति पृष्टवती सा ।

नेगिः अविलम्बेन स्वस्य समस्याम् उक्त-

# जिम्कार्बेट्राष्ट्रियोद्यानम्

भारतस्य प्रथमं राष्ट्रियोद्यानं कार्बेट्-उद्यानम् । विंशत्यधिकपञ्चशतवर्गकीलोमीटर्प्रदेशे एतत् उद्यानं प्रसृतम् अस्ति । १९३५तमे वर्षे तदानीन्तनस्य उत्तरप्रदेशस्य भूतपूर्वराज्यपालस्य नाम्ना हैलैराष्ट्रियोद्यानं संस्थापितम् । अनन्तरं १९५७तमे वर्षे एतस्य उद्यानस्य जिम्कार्बेट् राष्ट्रियोद्यानम् इति पुनर्नामकरणं कृतम् । जिम्कार्बेट् कश्चित् प्रख्यातः मृगयानुभवलेखकः ।

एतत् उद्यानं पौरीगढवाल्-नैनितालमण्डलयोः व्याप्तम् अस्ति । रामगङ्गानद्याः तीरे प्रसृतम् अस्ति एतत् उद्यानम् । नद्याः कृते निर्मितस्य जलबन्धस्य कारणतः अत्र कृतकसरोवरः कश्चन निर्मितः अभवत् । अस्मिन् राष्ट्रियोद्याने विपुलं जीववैविध्यं द्रष्टुं शक्यम् । अत्र व्याघ्राः, गजाः, विशिष्टजातीयाः हरिणाः, साम्बार् इत्यादयः प्राणिनः विशेषरूपेण संरक्षिताः सन्ति । एतदतिरिच्य ११० विधानि सस्यानि, ६०० विधाः पक्षिणः च अत्र सन्ति । व्याघ्राणां संरक्षणयोजनायाः प्रथमः कार्यक्रमः १९७३ तमे वर्षे इतः एव आरब्धः ।

वान् । पितुः नियमम् अपि श्रावितवान् । शमा शान्ततया सर्वं श्रुतवती । नेगिः यदा कथां समापितवान् तदा सा शिरश्चालनपूर्वकं मनसा हसितवती । बुल्बुलायाः शिरः स्पृशन्ती सा उक्तवती - ''एतदर्थं किमर्थं क्लेशः ? धनार्जनं सरलम् एव । एतस्याः ऊर्णानि कर्तयित्वा विक्रीयताम् । क्रेता ऊर्णेन स्वेदकानि कटान् वा निर्माय विक्रयणं कुर्यात्'' इति ।

एतं सरलं परिहारं श्रुत्वा नेगिः स्तब्धः अभवत् । 'पितुः नियमं पालयितुम् एषः युक्तः उपायः' इति सः अचिन्तयत् ।

सः आनन्देन कूर्दनं कुर्वन् - ''धन्यवादाः शमे । धन्यवादाः'' इति उक्तवान् । 'एषः उपायः पूर्वं मम मनसि न स्फुरितः एव खलु' इति सः अचिन्तयत् ।

तद्दिने एव नेगिः मेषां समीपग्रामं प्रति नीत्वा तस्याः रोमाणि कर्तितवान् । सर्वाणि रोमाणि एकस्यां गोण्यां संगृह्य ऊर्णक्रेतुः समीपं गत्वा तोलनं कारयित्वा विक्रीतवान् । बुल्बुलारोमाणि सम्यक् कङ्कतेन प्रसाधितानि इव आसन् । मृदूनि अपि आसन् । तस्मात् ग्रन्थिमयता निवारणीया न आसीत् । अतः ऊर्णक्रेता आनन्देन उत्तमं मूल्यं दत्तवान् ।

परेद्यवि नेगिः शुनकं मेषां च स्वीकृत्य पर्वतम् अतिक्रम्य गृहं प्रति प्रत्यागतवान् । गृहस्य प्राप्तेः समनन्तरं सः मातापितरौ प्रीत्या आलिङ्गितवान् । अनन्तरं सः जागरूकतया एकं लघुबन्धम् उद्घाटितवान् । तत्र कतिचन रूप्यकाणि नाणकानि च आसन् ।

'एतावच्छीघ्रम् एषः पुत्रः धनार्जनं कृत्वा प्रत्यागतवान्' इत्यतः मातापित्रोः आनन्दः द्विगुणितः अभवत् ।

पिता पुत्रं पृष्टवान् - ''समस्यायाः परिहारं भवान् स्वयं चिन्तितवान्, उत केनचित् साहाय्यं कृतम् ?'' इति ।

''शमानामिका काचित् युवतिः साहाय्यं कृतवती । सा स्वभगिन्या सह पर्वतस्य उपरि वसति'' इति उक्तवान् नेगिः । दम्पती सूच्यरूपेण परस्परं दृष्टवन्तौ ।

नेगेः माता - ''सा शमा बुद्धिमती इति भाति । सा नेगेः कृते योग्या स्यात् । आवयोः अनन्तरं सा एव मम पुत्रस्य योगक्षेमं निर्वोढुं समर्था'' इति आनन्देन पतिम् उक्तवती ।

अतः परेद्यवि नेगेः पिता पुत्रेण अनुसृतं मार्गम् अनुसरन् शमायाः गृहं गतवान् । शमया सह पुत्रस्य विवाहं निश्चितवान् । नेगिशमयोः विवाहः सम्पन्नः । तौ सुखेन जीवनं यापयतः स्म । तौ स्वपुत्रान् उद्दिश्य - 'आवयोः मेलने मार्जारस्य, शुनकस्य, मेषायाः च पात्रं कथम् आसीत्' इत्येतं विषयं सहासं वदतः स्म ।





# सकृद्भिक्षायाचकः

पावनः अत्यन्तं कृपणः आसीत् । अग्रिमवंशीयैः सन्तोषेण, विना कष्टं जीवनं यापयितुं यावत् आवश्यकं तावती सम्पत्तिः तस्य आसीत् । तथापि आलस्यजीवनेन तस्याः सम्पत्तेः रक्षणम् अशक्यम् इति जानन् सः कदापि अलसः सन् न उपविशति स्म । सः अल्पम् एव खादति स्म । यतः अधिकखादनेन अधिकव्ययः इति भीतिः तस्य ।

यद्यपि सः अतीव कृपणः, तथापि तस्य बुद्धिः तु सुतीक्ष्णा आसीत् । सः कार्यकरणात् पूर्वं सम्यक् विचिन्त्य एव करोति स्म । पूर्वं विवाहे तस्य आसक्तिः न आसीत् । यतः विवाहकरणात् पत्न्याः पालनपोषणं करणीयं भवति, तस्मात् अधिकव्ययः भवति इति । गृहकार्यार्थं काञ्चित् कर्मकरीं नियुक्तवान् आसीत् सः । परन्तु सा समीचीनतया कार्यं न करोति स्म । प्रतिमासं वेतनदानसमये पावनस्य बहु खेदः भवति स्म । इदानीं सः एवं चिन्तयति - 'यदि अहं काञ्चित् परिणेष्यामि तर्हि पत्नी एव सर्वाणि गृहकार्याणि करिष्यति । वेतन-दानस्य आवश्यकता न भवति । आजीवनं सा गृहे एव तिष्ठन्ती सर्वकार्यभारं निर्वक्ष्यति' इति । अतः सः विवाहे मतिं कृतवान् ।

सर्वे सम्यक् एव जानन्ति स्म यत् पावनः परमकृपणः इति । तथापि बहवः तस्मै स्वपुत्रीं दातुम् उत्सुकाः आसन्, यतः तस्य समीपे महती सम्पत्तिः आसीत् । ते अधिकाधिकां वरदक्षिणां दातुमपि सिद्धाः आसन् । पावनः अस्मिन् विषये गभीरचिन्तनं कृतवान् ।

निर्धनबालिकायाः परिणयः एव वरम् इति सः चिन्तितवान् । 'धनिककुलीया परिणीता चेत् समस्याः स्वागतीकृताः भवन्ति । विवाहः अपि सवैभवं करणीयः भवति । धनिक-



कुलीया सुखेन उपवेष्टुम् इच्छति, गृहकार्याय सेवकान् नियोजयिष्यति च । अतः मया धनिककुलीया कदाचिदपि न परिणेतव्या' इति । एवं विचिन्त्य सः निर्धनकुलीयां पवित्रा-नामिकां कन्यां परिणीतवान् ।

पवित्रा सुन्दरी । विवाहात् पूर्वं तस्याः चिन्तनम् आसीत् – 'धनिकः मम पतिः कौशेयशाटिकाः आनीय दास्यति । अनेकानि आभरणानि अपि कारयिष्यति । सेवकाः बहवः सेवार्थं भविष्यन्ति' इति । किन्तु विवाहानन्तरम् एतादृशं सौभाग्यं किमपि न प्राप्तं तया ।

पवित्रायाः कण्ठे मातापितृभ्यां दत्तः कश्चन सुवर्णहारः आसीत् । कदाचित् पावनः – 'यदि आभरणानि शरीरे भवन्ति तर्हि सुवर्णांशः विनंक्ष्यति । विवाहादिषु शुभावसरे एतं हारं भवती धरतु'' इति उक्त्वा तं हारं पेटिकायां स्थापितवान् आसीत् ।

पावनः पत्न्याः निमित्तं याः शाटिकाः क्रीतवान् ताः अत्यल्पमूल्यस्य, रूक्षाः च । तादृशी शाटिका निर्धनस्यापि पितुः गृहे विवाहात् पूर्वं कदाचिदपि न धृतवती आसीत् पवित्रा ।

पावनः पत्न्याः प्रशंसां तु सदा करोति स्म – ''भवती अतिसामान्यं वस्त्रं धरति चेदपि सुन्दरी एव भासते । आभरणैः विना अपि भवत्याः सहजसौन्दर्यं शोभते'' इति ।

पवित्रा स्वभावेन एव नम्रा । पत्युः प्रशंसापूर्णानि वचनानि तां तोषयन्ति स्म । किन्तु भोजनविषये तस्याः पतिः महतीं कृपणतां दर्शयति स्म एव ।

पावनः भोजनाय अधिकं व्ययं कर्तुं न इच्छति स्म । उत्तमं भोजनं सेवितं चेत् स्वास्थ्यं विनश्यति इति वदति स्म सः । अतः आरोग्यकरम् आहारम् अधिकृत्य विषयसङ्ग्रहं कृतवान् सः । अल्पमूल्येन के के शाकाः लभ्यन्ते इति तेन आवली कृता । ततः तैः एव शाकैः पाकः करणीयः इति पत्नीं निर्दिष्टवान् सः । स च पाकः तस्मै तु रोचते स्म । पवित्रा तु तं कष्टेन एव खादति स्म ।

पवित्रा चिन्तयति स्म – 'मम पत्युः मनसः परिवर्तनाय कोऽपि देवः यदि साहाय्यं कुर्यात् तर्हि वरं भवेत्' इति । अतः रात्रौ स्वप्ने तया देवाः दृश्यन्ते स्म । किन्तु रात्रौ दृष्टः स्वप्नः दिने न स्मर्यते स्म ।

एकदा बहिः गत्वा प्रत्यागतः पावनः पत्नीम् उक्तवान् – ''शीघ्रं परिवेषयतु'' इति । पवित्रा

पूर्वदिने रात्रौ दृष्टं स्वप्नं स्मरन्ती तस्मै भोजनं परिवेषितवती ।

स्वस्य भोजनस्य अनन्तरं पावनः पत्नीम् अवदत् - ''भवती अपि भोजनं करोतु'' इति ।

तदा पवित्रा उक्तवती - ''ह्यः रात्रौ स्वप्ने मया पार्वती दृष्टा । सा सूचितवती यत् कस्मैचित् भिक्षुकाय अद्य भोजनं दत्तं चेत् सौभाग्यं सेत्स्यति, आयश्च वर्धिष्यते इति । एतस्य अन्नदानस्य निमित्तं धनव्ययः न भवेत् इत्यतः अहम् उपवासकरणं निश्चितवती । मन्निमित्तं कृतं भोजनं भिक्षुकाय दीयताम्'' इति ।

पावनः पत्न्याः बुद्धिमत्तां पूर्णेन मनसा अश्लाघत, भिक्षुकस्य अन्वेषणाय गृहात् निर्गतः च । गृहात् अनतिदूरे गुल्मस्य पार्श्वे भूमौ शयानः दीनावस्थाम् आपन्नः कश्चन भिक्षुकः दृष्टः तेन । सः भिक्षुकः आसीत् सकृद्भिक्षायाचकः ।

सकृद्भिक्षायाचकस्य विषये ग्रामे विविधाः कथाः श्रूयते स्म । सः दिने एकवारम् एव भोजनं सेवते स्म । तदर्थम् एकस्यैव गृहस्य पुरतः स्थित्वा भिक्षां याचते स्म । धनादिकं कदापि न स्वीकरोति स्म सः । अतः यस्य गृहस्य पुरतः स्थित्वा सः भिक्षां याचते तस्य गृहस्य जनाः तस्मै पूर्णोदरं भोजनं यच्छन्ति स्म । बहूनां विश्वासः आसीत् यत् सः यस्य गृहस्य भिक्षां सेवते तस्य गृहस्य हितं भविष्यति इति । सः दिने सकृत् एव भिक्षां स्वीकरोति स्म इत्यतः ग्रामजनाः तं निर्दिशन्ति स्म - 'सकृद्भिक्षायाचकः' इति ।



सः कस्मिन् दिने कस्मिन् गृहे भिक्षां याचते इति जनाः ज्ञातुं न शक्नुवन्ति स्म । अद्यावधि सः पावनस्य गृहं प्रति तु न आगतवान् आसीत् भिक्षायाचनाय ।

तस्मिन् दिने मार्गे गच्छतः तस्य भिक्षुकस्य उत्तरीयं वायुना नीतम् आसीत् । तत् ग्रहीतुं गतेन तेन पतितम् आसीत् । तस्मात् पादे व्रणः जातः आसीत् । उत्थातुम् अशक्नुवन् सः वेदनाम् अनुभवति स्म । तस्मिन् समये पावनः तत्र आगतः ।

पावनं दृष्ट्वा सः भिक्षुकः दीनस्वरेण अवदत् - ''श्रीमन् ! भवत्समीपे खादनयोग्यं यदि किमपि स्यात् तर्हि दीयताम् । तत् खादित्वा शक्तिं प्राप्य उत्थाय अहं दण्डसाहाय्येन इतः गमिष्यामि'' इति ।

पावनः भिक्षुकस्य एतत् वचनं श्रुत्वा नितरां सन्तुष्टः । पत्न्याः स्वप्नः साकारतां गच्छन्



अस्ति इति चिन्तयन् सः झटिति गृहं गत्वा भोजनम् आनीय दत्तवान् ।

भिक्षुकः त्वरया द्वित्राणि कवलानि खादित्वा मुखं वक्रीकुर्वन् पावनम् अवदत् - ''श्रीमन् ! बुभुक्षितेन रुचिः न ज्ञायते इति वचनं लोके श्रूयते । मम प्राणाः तु बुभुक्षया गच्छन्तः सन्ति । एवं स्थिते अपि एतत् भोजनं विषायते इव । कैः शाकैः एतत् भोजनं सज्जीकृतम् ?'' इति ।

पावनः सर्वं विवरणम् उक्तवान् । तत् श्रुत्वा भिक्षुकः अवदत् - ''मानवः नूतनां रुचिं प्राप्तुं विविधान् उपायान् अन्विष्यति । भवता एषः पाकक्रमः केन वा उद्देशेन आश्रितः ?'' इति ।

''एषः पाकक्रमः स्वास्थ्याय । एतस्य निर्माणार्थं व्ययः अपि अल्पः'' इति अवदत् पावनः ।

''भिक्षुकेण मया अपि एतादृशं भोजनं कदापि न खादितम् आसीत् । भवता प्रतिदिनम् एतत् कथं सेव्यते ?'' इति आश्चर्येण पृष्टवान् भिक्षुकः ।

''किं करवाणि ? मम भाग्ये एतत् एव लिखितम् अस्ति !'' इति विषादेन उक्तवान् पावनः ।

परिविष्टः आहारः न क्षेप्तव्यः इति तु भिक्षुकस्य नियमः । अतः सः पावनेन दत्तम् आहारं महता कष्टेन सेवितवान् । अनन्तरं कष्टेन कथञ्चित् उत्थाय खञ्जन् मन्दगत्या ततः निर्गतवान् ।

अनन्तरदिने पवित्रा स्वादुभोजनं सज्जीकृत्य पावनाय परिविष्टवती । तत् दृष्ट्वा पावनः आश्चर्येण अपृच्छत् - ''एतस्य पाकस्य निमित्तं ये पदार्थाः उपयुक्ताः ते कुतः प्राप्ताः भवत्या ? भवत्याः मातृगृहतः आगताः किम् ?'' इति ।

''ततः तु न आगताः । सकृद्भिक्षायाचकः आनीय दत्तवान् एतान् । मया निषिध्यमानः अपि सः वस्तूनि स्थापयित्वा गतवान् । मया चिन्तितम् - एतत्सर्वं मम स्वप्नस्य फलरूपेण प्राप्तम् अस्ति इति । अतः एतान् उपयुज्य पाकः कृतः मया'' इति ।

सकृद्भिक्षायाचकं यः भोजयति तस्य हितं भविष्यति इति पावनेन अपि श्रुतम् आसीत् एव । एतत् दृढीकर्तुं सः प्रतिवेशिनः एतद्विषये पृष्टवान् ।

तदा कश्चित् अवदत् - ''सः भिक्षुकः इदानीं सकृद्भिक्षायाचनव्रतं परित्यक्तवान् अस्ति । बहुभ्यः गृहेभ्यः भिक्षां स्वीकरोति सः । धनम् अपि गृहेभ्यः स्वीकुर्वन् अस्ति सः'' इति ।

भिक्षुके जातस्य एतस्य आकस्मिक-परिवर्तनस्य विषये पावने अपि कुतूहलम् उत्पन्नम् । सः तस्य भिक्षुकस्य अन्वेषणाय गृहात् निर्गतः ।

ग्रामात् बहिः तिन्त्रिणीवृक्षस्य अधः उपविष्टः सः भिक्षुकः तेन दृष्टः । पावनः तं व्रतपरित्यागस्य कारणं पृष्टवान् ।

तदा सः भिक्षुकः अवदत् - ''यदा अहं बुभुक्षितः आसं तदा भोजनदानेन भवता अहम् उपकृतः । एतद्विषये अहं कृतज्ञः अस्मि । किन्तु भवता यत् भोजनं सेव्यते तत् दृष्टवति मयि करुणा उत्पन्ना । अतः अहं बहुभ्यः गृहेभ्यः भिक्षारूपेण धनं प्राप्य वस्तूनि क्रीत्वा भवतः पत्न्यै दत्तवान् । भवतः गृहे स्वादुपाकः भवेत् इति एका एव इच्छा मम'' इति ।

भिक्षुकस्य वचनं श्रुतवतः पावनस्य शिरः लज्जया अवनतं जातम् । 'एषः भिक्षुकः मत्तः एकवारं भिक्षां प्राप्य प्रतिफलं दातुम् इच्छति । भिक्षया यत् धनं प्राप्यते तदेव मह्यं दातुं प्रयतते एषः । मत्समीपे तु धनस्य राशिः एव अस्ति । किन्तु किं तेन ? किं मया अद्यावधि कस्यापि साहाय्यं कृतम् ? धिक् मम हीनजीवितम्'' इति अचिन्तयत् सः ।

तस्मात् दिनात् पावनस्य व्यवहारे परि-वर्तनम् आगतम् । सकृद्भिक्षायाचकः पुनरपि सकृद्भिक्षायाचनव्रतम् एव आरब्धवान् । इदानीं सः पावनस्य गृहस्य पुरतः स्थित्वा अपि भिक्षां याचते ।





# नमस्कारशीलः नरेशः

नरेशः भूस्वामिनः कार्यालये उद्योगी । एषः उद्योगः दशरथस्य साहाय्यात् प्राप्तः आसीत् तेन । दशरथः कश्चन दूरबन्धुः तस्य ।

दशरथः नरेशम् उक्तवान् आसीत् - ''भवतः स्वभावः उत्तमः एव । किन्तु भवान् अन्येषु आदरप्रदर्शनं सम्यक् न जानाति । भवतः भूस्वामी नमस्कारप्रियः । अतः यदा यदा सः दृश्यते तदा तदा तस्य नमस्कारः करणीयः भवता । कदाचिदपि एतत् न विस्मर्तव्यम्'' इति ।

एतत् वचनं दृढतया स्थितम् आसीत् नरेशस्य मनसि । ऐदम्प्राथम्येन भूस्वामी यदा दृष्टः तदा नमस्कृतं तेन । एतस्मात् भूस्वामिनः मुखे मन्दहासः दृष्टः । परितः स्थितैः सह वार्तालापं कुर्वन् भूस्वामी नरेशम् अपश्यत् । तदा अपि नरेशेन नमस्कारः कृतः ।

नरेशस्य विनयेन सन्तुष्टः भूस्वामी तस्मै किमपि कार्यं दत्तवान् । कार्यं समाप्य आगतः नरेशः भूस्वामिनं नमस्कृत्य कृतं सर्वं निवेदितवान् । एवं भूस्वामी यदा यदा दृश्यते स्म तदा तदा नमस्कारं करोति स्म नरेशः । गच्छता कालेन भूस्वामिने नमस्कारसमर्पणं नरेशस्य प्रवृत्तिः जाता ।

नरेशस्य व्यवहारेण सन्तुष्टः भूस्वामी तम् अङ्गरक्षकं कृतवान् । तस्मात् नरेशः सदापि भूस्वामिनः पृष्ठतः तिष्ठति स्म । यदि कदाचित् किमपि वक्तुं भूस्वामी मुखपरिवर्तनं करोति तर्हि झटिति करौ योजयित्वा नमस्कारं करोति स्म नरेशः ।

चिन्तनसमये भूस्वामी इतस्ततः अटति स्म सर्वदा । एषः तस्य स्वभावः । तत्समये पार्श्वे तिष्ठति स्म नरेशः । यदा भूस्वामी स्वसमीपम् आगच्छति तदा झटिति नमस्करोति स्म सः ।

कदाचित् भूस्वामिनः कण्ठे काचित् वेदना

भार्गवः

उत्पन्ना । वैद्यः तं परीक्ष्य उक्तवान् यत् वामतः दक्षिणतः च मुखं पौनःपुन्येन चालनीयम् इति । भूस्वामी तथैव कर्तुम् आरब्धवान् । तस्य वामभागे भवति स्म नरेशः । यदा यदा भूस्वामी वामभागे स्वमुखम् आनयति तदा नमस्करोति स्म नरेशः । नरेशस्य एतां नमस्कारप्रवृत्तिं दृष्ट्वा अन्ये कर्मकराः सर्वे मनसि एव हसितवन्तः ।

कदाचित् भूस्वामी स्वक्षेत्रं प्रति गच्छन् आसीत् । नरेशः तम् अनुसृतवान् । मध्येमार्गं कश्चन चोरः आगत्य नरेशं घट्टनात् पातितवान् । अग्रे गत्वा सः भूस्वामिनः कण्ठात् सुवर्णहारम् आकृष्य स्वीकृतवान् । चकितः भूस्वामी परिवृत्य दृष्टवान् । तेन भूमौ पतितः नरेशः दृष्टः । नरेशः भूस्वामिनं दृष्ट्वा करौ उन्नीय नमस्कारं कृतवान् ।



नरेशः उत्थानस्थितौ नास्ति इति जानन् भूस्वामी 'चोरः' 'चोरः' इति उच्चैः वदन् चोरम् अनुसृतवान् । नरेशः अपि उत्थाय चोरम् अनुसृतवान् । नरेशः चोरसमीपं गत्वा तस्य ग्रहणाय हस्तं प्रसारितवान् । चोरः हस्तलभ्यः एव आसीत् । तावता नरेशेन भूस्वामी दृष्टः पार्श्वे । अतः सः भूस्वामिनं नमस्कृतवान् । तावता चोरः अवसरं प्राप्य पलायितवान् आसीत् ।

हस्तलभ्यम् अपि चोरं नरेशः त्यक्तवान् इत्यतः कुपितः भूस्वामी तं सम्यक् तर्जितवान् । तदा नरेशः करौ योजयित्वा अवदत् – ''श्रीमन् ! भवन्तं दृष्ट्वापि नमस्कारम् अकृत्वा स्थातुं न अर्हामि अहम् । तथा यदा नमस्कारः कृतः तदा चोरः पलायितः । किं मम नमस्कारः एव अनुचितः ? एवं तर्हि अहं मम व्यवहारं परिष्करिष्यामि'' इति ।

''भवतः नमस्कारकारणतः मम सुवर्णहारः विनष्टः जातः'' इति क्रोधेन खेदेन च अवदत् भूस्वामी ।

तदा नरेशः अवदत् – ''मया चोरस्य मुखं दृष्टम् अस्ति । सः अस्मन्नगरस्य एव । तस्य नाम न जानामि अहम् । पुनः सः दृष्टः चेत् मया अभिज्ञायेत एव । अतः भवान् उद्घोषणं कारयतु यत् नरेशेन चोरस्य मुखं दृष्टम् अस्ति, चोरः स्वयमेव सुवर्णहारं प्रत्यर्पयति चेत् एतत् प्रकरणम् अत्रैव समापयिष्यते, अन्यथा चोरम् अन्विष्य कठोरं दण्डनं दास्यते इति । तदा भवतः हारः प्राप्यते एव'' इति ।

भूस्वामी तदनुगुणम् एव उद्घोषणं कारित-



वान् । अनन्तरदिने एव सुवर्णहारः भूस्वामिनः मञ्चस्य उपरि प्राप्तः ।

भूस्वामी नरेशं प्रशंसन् अवदत् – ''मम सुवर्णहारः मया मञ्चे प्राप्तः इत्यतः स्पष्टं यत् मम भवनस्य कोऽपि कर्मकरः चोरस्य बन्धुः मित्रं वा स्यात् इति । तत् आस्तां नाम, सुवर्णहारः प्राप्तः इत्यतः अहं नितरां सन्तुष्टः अस्मि'' इति ।

तदा नरेशः सङ्कोचमिश्रितेन स्वरेण अवदत् – ''श्रीमन् ! मया एकम् असत्यम् उक्तम् आसीत् । वस्तुतः तु मया चोरस्य मुखं न दृष्टम् एव आसीत् । भवते नमस्कार-समर्पणभाग्यं मम न भवेत् इति विचिन्त्य मया उद्घोषणोपायः सूचितः । चोरः प्रत्यक्षम् आगतः चेदपि तम् अभिज्ञातुम् अहं न शक्नुयाम् एव । किन्तु चोरः एतत् न जानाति स्म । अतः भीतः सः हारं प्रत्यर्पित-वान्'' इति ।

''भवान् नमस्कारे यथा तथैव उपायचिन्तने अपि निपुणः एव । चोरं सम्यक् अदृष्टवान् भवान् किमर्थं मां तम् अंशं न उक्तवान् ?'' इति अपृच्छत् भूस्वामी ।

''श्रीमान् ! भवान् मयि अप्रसन्नः आसीत् । तत्समये यदि मया चोरः न दृष्टः इति अहं वदेयं तर्हि भवान् निश्चयेन क्रुद्धः अभविष्यत् । अतः मया चोरः दृष्टः इति न उक्तम् । तस्मात् उद्घोषणं कारितं भवता । ततः हारः प्राप्तः । यद्यहम् एवं न अकरिष्यं तर्हि भवान् मम वचने विश्वासं न अकरिष्यत्'' इति अवदत् नरेशः ।

भूस्वामी तस्य बुद्धिमत्तायाः विषये सन्तोषं प्रकटयन् अवदत् – ''अद्य अहं भवद्विषये सन्तुष्टः अस्मि । भवान् पाकशालां गत्वा पाचकं वदतु यद् द्विविधं मधुरं सज्जीकरणीयम् इति'' इति ।

नरेशः पाकशालां गत्वा पाचकम् एतम् अंशम् उक्तवान् । पाचकः एतत् अङ्गीकुर्वन् उक्तवान् – ''मया एतावता जामूनखाद्यं कुण्डलिकाः च निर्मिताः एव । एतेषां रुचिं पश्यतु किञ्चित्'' इति ।

ततः पाचकेन एका कुण्डलिका तस्मै दत्ता । नरेशः तत् अखादत् । तत् स्वादु आसीत् । तादृशः स्वादः तेन इतः पूर्वं न आस्वादितः आसीत् । अन्यत् एकं सः खादितुम् ऐच्छत् । किन्तु सङ्कोचवशात् सः न अयाचत ।

तस्य प्रत्यागमनस्य अनन्तरम् अल्पे एव

काले भूस्वामी पुनरपि तं पाकशालां प्रति प्रेषितवान् । पाचकः एतदवसरे अपि तस्मै कुण्डलिकां दत्तवान् ।

तस्मिन् दिने भूस्वामी नरेशं पुनः पुनः पाकशालां प्रति प्रेषयति स्म । यदा यदा सः पाकशालाम् आगच्छति तदा पाचकः तस्मै कुण्डलिकां ददाति स्म । दशाधिकवारं खादनानन्तरं कुण्डलिकानां विषये नरेशस्य अनादरः उत्पन्नः । अतः सः कुण्डलिका-खादनं निराकृतवान् ।

''एतेषां निराकरणं न करणीयम् । एषा भूस्वामिनः आज्ञा'' इति तम् अवदत् पाचकः ।

''अद्य मया निरन्तरं कुण्डलिकाः एव खादिताः । अतः अन्यत् किमपि स्वादु खाद्यम् अस्ति चेत् दीयताम्'' इति पाचकम् अवदत् नरेशः ।

''भूस्वामिनः आदेशः अस्ति यत् भवते कुण्डलिकाः एव दातव्याः इति । अन्यत् खाद्यं किमपि अपेक्षितं चेत् भूस्वामिनः अनुज्ञा प्रार्थनीया भवता'' इति अवदत् पाचकः ।

नरेशः एतम् अंशं भूस्वामिनम् अवदत् । तदा भूस्वामी अपृच्छत् - ''किं कुण्डलिकाः भवतः प्रियाः न ?'' इति ।

''कुण्डलिकाः मम प्रियाः एव । किन्तु एकस्मिन् एव दिने बहुवारं तासां खादनात् मम मनः विमुखं जातम् अस्ति'' इति उक्तवान् नरेशः ।

एतत् श्रुत्वा हसन् अवदत् भूस्वामी - ''मां तोषयितुं भवान् निरन्तरं नमस्कारं कुर्वन् भवति खलु । यतः नमस्काराः मम प्रियाः इति भवान् जानाति । एवमेव अहं भवतः तोषणाय कुण्डलिकाः दत्तवान् । यतः कुण्डलिकाः भवतः प्रियाः इति अहं जानामि । प्रियमपि वस्तु यदा अत्यधिकप्रमाणेन दीयते तदा तत् अप्रियं भवति । तस्मात् अस्माकं मनः विमुखं भवति । किम् एतत् अवगतं भवता ?'' इति ।

इदानीं नरेशेन वस्तुस्थितिः अवगता । तस्मात् दिनात् सः भूस्वामिनं द्वित्रवारम् एव नमस्करोति स्म, न अधिकवारम् । किन्तु जनाः तु तं 'नमस्कारशीलः नरेशः' इत्येव निर्दिशन्ति स्म ।



# भारतम् अवगम्यताम्

१. भारतस्य राज्येषु एषः अन्यतमः । एतस्य मुद्रणसमये दक्षिणोत्तरादयः दिशः न निर्दिष्टाः । एतस्य राज्यस्य नाम किम् ? एतस्य राजधानी च का अस्ति ?



२. इदानीम् अस्माकं देशे विशालतमं राज्यं किम् ?
(अ) उत्तरप्रदेशः
(आ) मध्यप्रदेशः
(इ) राजस्थानम्
(ई) आन्ध्रप्रदेशः

३. यदा कलकत्तास्थं राजधानीत्वं देहल्या प्राप्तं तदा भारते राजप्रतिनिधिः (Viceroy) कः आसीत् ?
(अ) लार्ड् कर्झन्
(आ) लार्ड् हर्डिङ्ग्
(इ) लार्ड् वावेल्
(ई) लार्ड् डलहौसी

४. 'चिप्को'-आन्दोलनं केन आरब्धम् ?
(अ) मेनकागान्धिवर्यया
(आ) अरुन्धतीराय्वर्यया
(इ) मेधापाटकर्वर्यया
(ई) सुन्दरलालबहुगुणवर्येण

५. हैदराबादनगरेण आन्ध्रप्रदेशस्य राजधानीत्वं यत् प्राप्तं ततः पूर्वं किं नगरं तस्य राज्यस्य राजधानी आसीत् ?
(अ) नेल्लूरु
(आ) कर्नूल्
(इ) विजयवाडा
(ई) विशाखपत्तनम्

६. जलियन्वालाबागीयायाः दुर्घटनायाः कारणतः रवीन्द्रनाथठागोरवर्यः ब्रिटिश्सर्वकारेण प्रदत्तं 'नैट्हुड्' बिरुदं प्रत्यर्पितवान् । सा च घटना कदा प्रवृत्ता ?
(अ) १९२९ (आ) १९२२
(इ) १९२४ (ई) १९२७

*(उत्तराणि अग्रिमे मासे)*

**'सप्टम्बर्' मासस्य प्रश्नानाम् उत्तराणि**

*१. इ - १, अ - २, आ - ३*
*२. न्यायवादिवृत्तिः ।*
*३. व्यङ्ग्यचित्रकारः शङ्करः ।*
*४. रशियादेशे ।*
*५. ४९ वर्षीया ।*
*६. सूचनाप्रसारमन्त्रालयस्य ।*
*७. वित्तकोषाणां राष्ट्रियीकरणम् ।*
*८. १९८० तमे वर्षे ।*



# विघ्नेश्वरः

अम्बा कदाचित् फलपूर्णैः वृक्षैः युक्तेन मार्गेण गच्छन्ती आसीत् । तदा वृक्षस्य उपरि उपविष्टः सुन्दरः बालकः तया दृष्टः । एषः बालकः कोपनीयः, एतेन सह वार्तालापः करणीयः च इति तस्याः मनसि इच्छा उत्पन्ना । सा तम् अवदत् – ''वत्स ! मह्यम् अपि एकं फलं ददातु'' इति ।

तदा बालकः मन्दहासपूर्वकम् अवदत् – ''अम्ब ! कीदृशं फल् इष्यते भवत्या ? एतस्मिन् वृक्षे विविधानि फलानि सन्ति । वार्धकनिवारकं फलं ददानि, उत मृत्युं जेतुम् उपकारकम् ? अथवा धनप्रापकं फलम् एव यच्छानि ?'' इति ।

अम्बा अवगतवती यत् एषः बालकः सुब्रह्मण्येश्वरः इति । सा तं प्रणम्य अवदत् – ''देव ! मह्यं तादृशं ज्ञानं ददातु, यच्च अन्येभ्यः बहुधा वितीर्यते चेदपि क्षीणं न भवेत्'' इति ।

अनन्तरक्षणे सुब्रह्मण्यस्वामी मयूरवाहनः सन् प्रत्यक्षः जातः । हस्ते स्थितस्य अङ्कुशस्य अग्रेण अम्बायाः शिरः स्पृष्ट्वा ताम् अनुगृहीतवान् सः । तस्मात् अम्बया ओङ्कारतत्त्वस्य, ब्रह्मज्ञानस्य, जीवन्मुक्तिमार्गस्य च बोधः प्राप्तः । सुब्रह्मण्येश्वरः ताम् आशिषा अनुगृह्य ततः अदृश्यः जातः ।

अम्बा पादाभ्याम् एव सञ्चरन्ती गृहं गृहं गत्वा ज्ञानस्य, भक्तेः, धर्मस्य च प्रसारं कृतवती । अम्बायाः मुखात् निर्गतानि मधुराणि वचनानि गीतरूपेण जनानां मध्ये प्रसारं प्राप्नुवन् । कदाचित् देशाटनं कृत्वा अम्बा सन्ध्यासमये अरण्यमार्गं प्राप्तवती ।

आकाशः मेघैः आच्छन्नः आसीत् । सर्वत्र अन्धकारः प्रसृतः आसीत् । विद्युतः स्फुरन्ति



स्म । जलबिन्दूनां पतनम् अपि आरब्धम् । शिलायाः घट्टनं प्राप्य अम्बा पतितवती । तस्मात् तस्याः हस्तस्थः दण्डः दूरे पतितः ।

तावता अम्बया कस्यचित् पादध्वनिः श्रुतः । अम्बा मुखम् उन्नीय दृष्टवती । तत्समये विद्युत् स्फुरिता । विद्युतः प्रकाशे तया सुन्दरः तुन्दिलः कश्चन बालः दृष्टः । सः उत्थानाय अम्बायाः साहाय्यं कृतवान् । यदा अम्बा उत्थितवती तदा तस्यै दण्डम् आनीय दत्त्वा सः अपृच्छत् - "अम्ब ! कुत्र गम्यते भवत्या ? किं तीर्थं सेवितुम् इष्यते ?" इति ।

"वत्स ! मम दृष्ट्या एतत् विश्वम् एव किञ्चन दिव्यं क्षेत्रम् । किन्तु यत् क्षेत्रं मया प्राप्तव्यं तत्र गमनाय मार्गः न दृश्यते । मया भवतः परिचयः न प्राप्तः । भवान् अल्पवयस्कः बालः इव दृश्यते । एतस्मिन् अन्धकारे किमर्थम् अत्र आगतं भवता ?" इति अपृच्छत् अम्बा ।

"अम्ब ! भवत्याः बाल्यमित्रम् अहम् । आ जन्मनः मां जानाति भवती । अन्धकारकारणतः भवत्या अहं न अभिज्ञातः । तदस्तु, भवती किं क्षेत्रं प्राप्तुम् इच्छति ?" इति अपृच्छत् सः बालकः ।

"भवन्तं कथयामि चेत् किं प्रयोजनम् ? मया तु शिवसान्निध्यरूपं महाक्षेत्रं प्राप्तव्यम् अस्ति" इति उक्तवती अम्बा ।

"किम् एतत् कष्टकर मम ? सर्वथा न । मम हस्तं गृह्णातु । गच्छाव तावत्" इति उक्त्वा सः बालकः अम्बायाः हस्तं गृहीत्वा प्रस्थानम् आरब्धवान् । तावता पुनरपि विद्युत् स्फुरिता । तत्प्रकाशे तया दृष्टं यत् विघ्नेश्वरः एव शुण्डया हस्तं गृहीत्वा नयन् अस्ति इति ।

अम्बा नेत्रे निमील्य उक्तवती - "हे देव ! आ बाल्यात् भवान् एव माम् अग्रे नयन् अस्ति" इति ।

किञ्चिद्दूरं गमनस्य अनन्तरं विघ्नेश्वरः अवदत् - "अम्ब ! आवां शिवसान्निध्यस्थलं प्राप्तवन्तौ स्वः" इति । एतत् श्रुत्वा अम्बा नेत्रे उन्मीलितवती ।

तत्र तया प्रकाशमात्रं दृष्टं, न अन्यत् । तया अधः दृष्टिः प्रसारिता । तत्र नक्षत्रमण्डलं दृष्टिगोचरं जातम् । धूमकेतवः, वेगेन भ्रमन्ति ज्योतींषि, प्रकाशचक्रम् इव शोभमानानि तेजोमण्डलानि इत्यादिभिः युक्तम् अनन्तं विश्वम् एव स्वपादयोः अधः शोभमानं दृष्टं तया ।

विघ्नेश्वरः अम्बायाः हस्तं मुञ्चन् अवदत् - "अम्ब ! भवत्या शिवस्य सान्निध्यं प्राप्तम् अस्ति । अत्र 'काल'नामकं वस्तु नास्ति ।

अतः नाशः अपि अत्र नास्ति । सृष्टिस्थितिलयातीतं शिवसान्निध्यम् एतत् । वास्तविकः कैलासः एषः एव'' इति । ततः सः अन्तर्हितः जातः ।

अम्बा आमूलचूडं समानतया व्याप्तं किञ्चन ज्योतिः दृष्टवती । तत्र विश्वेश्वरः शिवः तया दृष्टः । तम् उभयतः विघ्नेश्वरः, पार्वती, कुमारस्वामी, नन्दी च आसन् । अम्बया शिवसाक्षात्कारः प्राप्तः । शिवः ताम् अनुग्रहपात्रं कृतवान् ।

पावनमिश्रः तादृशं कञ्चित् कृषकं दृष्टवान्, यश्च एकं भित्तिचित्रं निर्निमेषं पश्यन् आसीत् । तत्र इक्षुदण्डं हस्तेन गृहीत्वा स्थितः विघ्नेश्वरः दृश्यते स्म । एतत् दृष्टवान् पावनमिश्रः तच्चित्रसम्बद्धां कथाम् आरब्धवान् –



पूर्वं कश्चन भूस्वामी प्रतिवर्षं गणेशोत्सवं महता वैभवेन सञ्चालयति स्म । जनाः तं 'गणेशभक्तशिरोमणिः' इति वदन्ति स्म । भूस्वामिनः आधीन्ये अपारा कृषिभूमिः आसीत् । एकं विशालम् इक्षूद्यानम् अपि आसीत् तस्य । तस्य इक्षूद्यानस्य पालकः कश्चन कर्मकरः आसीत् । सः अपि गणेशभक्तः एव । सः सर्वदा गणेशं स्मरन् मनसि एव प्रार्थयति स्म – ''गणेश्वर ! एतदवसरे इक्षूद्याने समृद्धिः अधिकाधिकतया यथा भवेत् तथा अनुग्रहं करोतु'' इति ।

सः इक्षूद्याने परिश्रमपुरस्सरं कार्यं करोति स्म । तेन सह तस्य पत्नी पुत्री चापि परिश्रमं कुरुतः स्म । किन्तु भूस्वामी तस्मै कुटुम्बाय योग्यं वेतनं न ददाति स्म । यत् अल्पं वेतनं दीयते तदपि समये न दीयते स्म । तथापि सः कर्मकरः तु कमपि न दूषयति स्म, यतः यावत् प्राप्यते तावता एव सन्तोषेण स्थितिः तस्य स्वभावः आसीत् ।

भूस्वामिनः पत्नी उत्तमस्वभावेन युक्ता आसीत् । यत्रकुत्रचिदपि अन्याय्यं दृष्टं चेत् सा गणेशं निवेदयति स्म । पतिः कर्मकराय अल्पं वेतनं ददाति इति ज्ञात्वा सा अवदत् – ''वराकाः ते । परिश्रमेण कार्यं कृत्वा अपि योग्यं वेतनं न प्राप्नुवन्ति । तेभ्यः योग्यं वेतनं किमर्थं न दीयते भवता ?'' इति ।

''अहो ! कीदृशं वचनं भवत्याः ? एतद्विषये भवत्याः मार्गदर्शनं केन वा प्रार्थितम् ?'' इति वदन् भूस्वामी पत्नीं तर्जितवान् । एतत् श्रुत्वा भूस्वामिनः पत्नी मनसि एव अचिन्तयत् – 'ये परिश्रमं कुर्वन्ति तेभ्यः वेतनम् अदत्त्वा उत्सवाचरणं क्रियते चेत् किं वा प्रयोजनम् ? हे भगवन् ! मम आर्यपुत्राय



सद्बुद्धिं ददातु'' इति ।

इक्षुदण्डाः यदा सम्यक् प्रवृद्धाः तदा ते शकटेषु आरोप्य भूस्वामिनः गृहं प्रति नीताः । तेषां समृद्धिं दृष्ट्वा भूस्वामी अवदत् – ''एतस्मिन् वर्षे गणेशस्य कृपया उत्तमा समृद्धिः दृश्यते क्षेत्रे । मया गणेशस्य पूजा या क्रियते तस्याः फलम् एतत्'' इति ।

''एवं तर्हि अस्माकं कर्मकराणां परिश्रमस्य किं किमपि फलं नास्ति ?'' इति अपृच्छत् भूस्वामिनः पत्नी ।

''अये ! किमेतत् कर्मकराणां समर्थनं भवत्याः ? यदि एवं कर्मकराणां पक्षः एव समर्थ्येत तर्हि अस्माभिः भिक्षापात्रं ग्रहीतव्यं भवेत् । भगवतः गणेशस्य कृपया एव फलसमृद्धिः प्राप्ता अस्माभिः । कर्मकराणां किं वा पात्रमस्ति अत्र ?'' इति अवदत् भूस्वामी ।

कर्मकरस्य पुत्रः अपि गणेशस्य महाभक्तः आसीत् । विनायकचतुर्थीदिने सः उद्यानसरोवरादिकं गत्वा श्वेतकुमुदं, रक्तकमलं, विविधानि पुष्पाणि, पर्णानि च आनयति स्म ।

विनायकचतुर्थी सम्प्राप्ता आसीत् । तस्मिन् दिने इक्षुदण्डबन्धान् भूस्वामिगृहं नयन्तं पितरम् अवदत् सः – ''तात ! एतस्मिन् वर्षे वयमपि गणेशाय इक्षुदण्डम् अर्पयाम । किम् अहम् इतः एकम् इक्षुदण्डं गृहं नयेयम् ?'' इति ।

कर्मकरः इक्षुदण्डबन्धात् एकम् इक्षुदण्डम् अपनीय पुत्राय दत्तवान् । तस्मिन् एव समये तत्र आगतः भूस्वामी एतत् अपश्यत् । सः महान्तं क्रोधं प्राप्य अवदत् – ''अये दुष्ट ! किं भवान् सर्वान् इक्षुदण्डान् स्वगृहं नयन् अस्ति ?'' इति ।

सः कशां स्वीकृत्य तं कर्मकरं बहुधा अताडयत् अपि । ग्रामीणाः सर्वे एतत् दृश्यं दृष्टवन्तः एव । किन्तु कोऽपि तस्य कर्मकरस्य रक्षणाय प्रयासं न कृतवान् । भूस्वामिनः विरुद्धं व्यवहर्तुं तेषु कस्यापि धैर्यं न आसीत् ।

कशाप्रहारान् सोढुम् अशक्नुवन् सः कर्मकरः धैर्येण अवदत् – ''श्रीमन् ! अद्य गणेशचतुर्थी । भगवतः नैवेद्याय मया एकः एव इक्षुदण्डः पुत्रस्य हस्ते अर्पितः । यदि मम वचने भवतः विश्वासः नास्ति तर्हि मम गृहं गत्वा भवान् एव परीक्षां करोतु'' इति ।

''किम् उक्तं भवता ? नीचकुले जातस्य भवतः पूजाधिकारः किम् अस्ति ? भवता अपि गणेशस्य कृपा किम् इष्यते ?'' इति उपहासपूर्वकं पृष्टवान् भूस्वामी ।

''श्रीमन् ! अहं नीचकुलीयः स्याम् । किं तेन ? किम् अस्मासु भगवद्विषयिणी भक्तिः

न भवेत् ?'' इति अपृच्छत् कर्मकरः ।

भूस्वामी पुनरपि उपहासपूर्वकम् उक्तवान् – ''अये, भवतः मुखम् एव वदति भवदीयां योग्यताम् । भवान् भक्तः कथं वा भवेत् ? भवतः भगवतः च तावत् एव अन्तरं यावत् आकाशपातालयोः स्यात् । गच्छतु, गृहतः इक्षुदण्डम् आनयतु'' इति ।

कर्मकरः प्रत्युत्तरम् अवदत् – ''श्रीमन् ! एकस्य इक्षुदण्डस्य निमित्तम् एतावान् खेदः किमर्थम् ? तत् नास्ति चेत् किं वा नश्येत् भवतः? अनेकशकटमितान् इक्षुदण्डान् वयं भवद्गृहं प्रापितवन्तः स्मः । एकम् इक्षुदण्डं प्राप्य किं भवनं निर्मीयते भवता ?'' इति ।

कर्मकरस्य वचनं श्रुत्वा धनिकः कोपेन गर्जन् अवदत् – ''सत्यम्, एकस्य दण्डस्य अप्राप्त्या मम न काऽपि हानिः । न एकस्य, अपि तु सहस्रकस्य अप्राप्त्या अपि न हानिः मम । सहस्रकम् अपि तृणसमानं मम । तत् आस्तां तावत् । एतावान् वादः क्रियते खलु भवता । अतः श्वः प्रातःकालाभ्यन्तरे सहस्रम् इक्षुदण्डाः खादनीयाः भवता । श्वः प्रातः तेषां रसहीनभागस्य राशिः दर्शनीयः । यदि एवं कर्तुं न शक्यते तर्हि सहस्रं कशाप्रहाराः प्राप्तव्याः'' इति ।

एतदन्तरं सः सेवकानां द्वारा तस्य हस्तौ बद्ध्वा तं विशाले कस्मिंश्चित् धान्यागारे स्थापयित्वा तस्य पुरतः सहस्रेण इक्षुदण्डैः युक्तं राशिम् अपातयत् । सः तस्य धान्यागारस्य



रक्षणाय सेवकान् अपि नियोजितवान् ।

भूस्वामिनः पत्नी एतत्सर्वं दृष्टवती एव । सा एतत् अन्याय्यं न असहत । सा गणेशं प्रार्थितवती – ''विघ्नेश्वर ! असहायः अस्माकं कर्मकरः निष्कपटः । यदि सः तेषां सर्वेषाम् इक्षुदण्डानां खादने प्रवृत्तः भवेत् तर्हि मृतः भवेत् । यदि सः तान् न खादिष्यति तर्हि मम पतिः तं मारयेत् । अतः भवता एव सः रक्षणीयः'' इति ।

किं करणीयम् इति कर्मकरः न जानाति स्म । किङ्कर्तव्यताविमूढः सः विघ्नेश्वरं स्मरन् सायङ्कालपर्यन्तं मौनेन उपविष्टवान् । तत्रैव तेन निद्रा प्राप्ता ।

प्रातःकाले भूस्वामी धान्यगारं गत्वा परिशीलितवान् । कर्मकरस्य पुरतः निष्कासितरसानां श्वेतवर्णीयानाम् इक्षुदण्डानां राशिः एव दृश्यते स्म । एतत् दृष्ट्वा भूस्वामी नितराम् आश्चर्यचकितः ।

भूस्वामिनः उच्चध्वनिं श्रुत्वा तदीया पत्नी धावन्ती तत्र आगतवती । भूस्वामी ताम् अवदत् – ''अस्माकं सर्वनाशः जातः । धान्यागारे एकः अपि इक्षुदण्डः सरसः न दृश्यते । सर्वे रसहीनाः एव । सः कर्मकरः न, अपि तु पिशाचः एव स्यात् । इतः गच्छाव शीघ्रम् । अन्यथा सः आवाम् अपि खादेत्'' इति ।

तदा भूस्वामिनः पत्नी तम् उक्तवती – ''अस्माकं कर्मकरः न पिशाचः । इक्षुदण्डाः तेन न खादिताः अपि । उषःकाले मया गजस्य लघुः घीङ्कारः श्रुतः । तस्मात् जागरिता अहं बहिः दृष्टिं प्रसारितवती । तदा कश्चन महागजः इक्षुदण्डान् खादन् दृष्टः मया । अल्पे एव काले सः अदृश्यतां गतः अपि'' इति ।

''किं एतत् वदति भवती ? इतः समीपे कुत्रापि गजः नास्ति एव । कुतः आगतः सः ?'' इति आश्चर्येण अवदत् भूस्वामी ।

भूस्वामी एवं पत्नीं यावत् वदन् आसीत् तावता केचन गणेशोत्सवमण्डपात् धावन्तः आगत्य अवदन् – ''महोदय ! वयं गणेशमण्डपे यां मूर्तिं स्थापितवन्तः आस्म सा गतरात्रितः न दृश्यते । सर्वत्र अन्वेषणं कृतम् अस्माभिः । किन्तु मूर्तिः तु न प्राप्ता'' इति ।

तावता धान्यागारे दृष्टिं प्रसारितवन्तः केचन – ''अहो, सा मूर्तिः अत्र दृश्यते'' इति वदन्तः मूर्तेः दिशि धावितवन्तः ।








# वरद्वयम्

पुरा सत्यकीर्तिनामकः कश्चन तरुणः आसीत् । बाल्ये एव मातापितरौ मृतौ इति कारणात् तं सत्यकीर्तिं पितामही एव पालितवती ।

कानिचन वर्षाणि अतीतानि । कदाचित् अस्वस्था सा पितामही बहूनि दिनानि शय्यामेव आश्रितवती । मरणसमये तया चित्रद्वयं सत्यकीर्तिहस्ते दत्त्वा उक्तम् - ''वत्स ! श्रद्धया अनयोः पूजाकरणं भवते शुभं दद्यात्'' इति ।

पितामह्याः मरणस्य अनन्तरं तत्रैव स्थातुम् अनिच्छन् सः सत्यकीर्तिः ततः निर्गतः । अरण्यमार्गेण अपि किञ्चिद्दूरं तेन गन्तव्यम् आसीत् । एवं गमनसमये तस्मिन् वने एकं गृहं दृष्टं तेन । तत्र काचित् महिला आसीत् । गृहसमीपं गत्वा ताम् आश्रयदानं प्रार्थितवान् सत्यकीर्तिः ।

सा महिला अस्य याचनां तिरस्कुर्वती उक्तवती - ''इतः पूर्वस्यां दिशि गच्छतु । तत्र एकं शिखरं दृश्यते । तत्र अनेके वृक्षाः सन्ति फलानि दातुम् । तत्र किञ्चन गृहमपि अस्ति । सः प्रदेशः भवतः वासाय योग्यः अस्ति'' इति ।

सत्यकीर्तिः ततः गत्वा तत् शिखरं प्राप्तवान् । महिलया यथा उक्तं तथा तत्र एकं गृहम् आसीत् । शिखरं परितः फलैः पूर्णाः वृक्षाः अपि आसन् । तैः फलैः उदरं पूरयन् सत्यकीर्तिः पितमह्या दत्तं चित्रद्वयं श्रद्धया पूजयन् तस्मिन् गृहे एव वासं कृतवान् ।

कानिचन दिनानि अतीतानि । एकस्मिन् दिने काचन देवी प्रत्यक्षीभूय - ''भवतः पूजया अहं सन्तुष्टा अस्मि । का इच्छा भवतः ?'' इति पृष्टवती सत्यकीर्तिम् ।

''अम्ब ! भवती कीदृशी देवी ?'' इति तां पृष्टवान् सत्यकीर्तिः ।

''अहं 'स्वार्थदेवी' अस्मि । भवता यतः वरः पृच्छ्यते तत्र स्वार्थांशः भवेत् एव ।



एतम् अंशं मनसि निधाय वरं पृच्छतु'' इति उक्तवती सा देवी ।

''भवती एतावच्छीघ्रं प्रत्यक्षा भवति इति नाहं ज्ञातवान् । अतः कृपया श्वः पुनः दर्शनं ददातु भवती । तदा मया पृष्टं वरं ददातु'' इति सत्यकीर्तिः देवीम् उक्तवान् ।

स्वार्थदेवी 'अस्तु' इति अङ्गीकृत्य ततः अदृश्या अभवत् ।

सत्यकीर्तिः स्वार्थः नाम कः इति न ज्ञातवान् । अतः सः गृहतः प्रस्थाय पूर्वं या महिला दृष्टा आसीत् ताम् एतं विषयम् उक्त्वा पृष्टवान् – ''स्वार्थः नाम कः ?'' इति ।

तस्य वचनं श्रुत्वा सा महिला तम् अन्तः आहूय तस्मै खाद्यादिकं दत्त्वा, काञ्चित् कन्याम् आनीय तस्य पुरतः संस्थाप्य पृष्टवती – ''एषा कन्या कथम् अस्ति ?'' इति ।

सत्यकीर्तिमुखात् 'अपूर्वा' इति शब्दः निस्सृतः । यतः सः एतावत्पर्यन्तं तादृशीं सुन्दरीं न दृष्टवान् आसीत् एव ।

''वत्स ! एषा मम पुत्री । एषा सुन्दरी अस्ति, किन्तु मूका । अतः मम पुत्री वचन-समर्था यथा भवेत् तथा स्वार्थदेवीं वरं पृच्छतु भवान् । यदि भवान् एवं करिष्यति तर्हि अहं भवतः विवाहम् अनया सह कारयिष्यामि'' इति उक्तवती सा महिला ।

सत्यकीर्तिः स्वगृहं प्रति गतः । अनन्तरदिने सः पूजायां यदा मग्नः आसीत् तदा सा स्वार्थदेवी प्रत्यक्षा अभूत् । तां दृष्ट्वा सत्यकीर्तिः – ''अम्ब ! अहं काञ्चन कन्यां परिणेतुम् इच्छामि । किन्तु सा वक्तुम् असमर्था । अतः कृपया तस्यै वाक्शक्तिः दीयताम्'' इति उक्तवान् ।

सा देवी तस्मै तादृशमेव वरं दत्त्वा अन्तर्हिता अभूत् । सत्यकीर्तिः पुनः तस्याः महिलायाः गृहम् आगतः । तत्र तेन ज्ञातं यत् तस्याः पुत्री इदानीं वक्तुं समर्था अस्ति इति ।

एतत् दृष्ट्वा सत्यकीर्तिः – ''दत्तस्य वचनस्य अनुगुणम् इदानीं भवती स्वपुत्र्या सह मम विवाहं कारयेत्'' इति ताम् उक्तवान् ।

''भोः, कीदृशः मूर्खः भवान् ! मम पुत्री अतीव सुन्दरी । इदानीं सा तु मूका अपि न । एतादृशीं कोऽपि महाराजः एव स्वयम् आगत्य परिणयेत्'' इति उक्तवती सा महिला ।

सत्यकीर्तिः दुःखेन पृष्टवान् – ''एतत् उचितं किम् ?'' इति ।

तदा सा महिला तम् उपहसन्ती उक्तवती – ''एतदेव उचितम् । यतः स्वार्थशब्दस्य अर्थः

कः इति भवान् मां पृष्टवान् । एषः एव स्वार्थशब्दस्य अर्थः । मम पुत्र्याः विवाहं भवता सह अकृत्वा केनचित् महाराजेन सह करणीयः इति यत् मया चिन्तितम्, एषः एव स्वार्थः नाम'' इति ।

सत्यकीर्तिः एतादृशं स्वार्थं न इष्टवान् । गृहं गत्वा सः अपरां देवीं पूजयितुम् उद्युक्तः । अनेकानि वर्षाणि अतीतानि । किन्तु सा देवी न प्रत्यक्षा जाता । सः एकाग्रचित्तः सन् पूजां कुर्वन् वृद्धः सञ्जातः । अन्ते एकस्मिन् दिने सा देवी प्रत्यक्षीभूय 'वरं प्रार्थयतु' इति तम् उक्तवती । सत्यकीर्तिः भक्त्या तां प्रणम्य – ''अम्ब ! भवती का ?'' इति पृष्टवान् ।

''अहं निस्स्वार्थदेवी अस्मि । मम वरात् यदि भवान् लाभं प्राप्तुम् इच्छति तर्हि वरे कोऽपि स्वार्थांशः न भवेत्'' इति सा उक्तवती ।

सत्यकीर्तिः –''भवती श्वः आगच्छतु'' इति ताम् उक्त्वा पुनः वने स्थितां तां महिलां द्रष्टुं गतः । तत्र सा महिला वृद्धा जाता आसीत् । सत्यकीर्तिः देव्याः विषयं सर्वं ताम् उक्त्वा – ''निस्स्वार्थः नाम कः ?'' इति पृष्टवान् ।

तदा सा महिला हसन्ती उक्तवती – ''कलिङ्गदेशस्य राजा मम पुत्रीं परिणीतवान् । तस्यां 'वत्सला'नामिका कन्या उत्पन्ना । अष्टादशवर्षीया सा अपि वक्तुम् असमर्था अस्ति । भवता निस्स्वार्थदेव्याः एषः वरः स्वीक्रियतां येन वरेण मम दौहित्री वक्तुम् आरभेत । यदि तथा भविष्यति तर्हि अहं तां भवते दत्त्वा विवाहं कारयिष्यामि । एषः एव निस्स्वार्थः वरः भवति'' इति ।

सत्यकीर्तिः ततः निवृत्तः मार्गे एतमेव विषयं चिन्तयन् भ्रान्तः सन् कस्यचन मुनेः



आश्रमं प्राप्तवान् । मुनिः तस्य समग्रं विषयं श्रुत्वा उक्तवान् - ''वत्स ! विंशतेः वर्षेभ्यः पूर्वमेव अहं तपः तप्तुम् आरब्धवान् । किन्तु अद्यावधि मम तपः फलप्रदं न अभवत् । अस्य कारणं किम् इति निस्स्वार्थदेवीं पृष्ट्वा मां सूचयतु'' इति ।

सत्यकीर्तिः तस्य वचनम् अङ्गीकुर्वन् कथमपि स्ववासस्थलम् आगतः ।

परेद्यवि निस्स्वार्थदेवी प्रत्यक्षा जाता । सत्यकीर्तिः तां वत्सलायाः वचनसामर्थ्यं, मुनेः तपसः असाफल्यस्य कारणज्ञानेच्छां च वरत्वेन पृष्टवान् ।

तदा निस्स्वार्थदेवी - ''वत्सला बहु शीघ्रमेव वक्तुं समर्था भविष्यति । तस्य मुनेः विषयः एवमस्ति यत् तस्य तपसः फलं सर्वं तस्य हस्ते स्थितः कमण्डलुः एव गिलति । तस्य कमण्डलौ या तपःशक्तिः अस्ति तया मुनेः किमपि प्रयोजनं नास्ति । किन्तु सा शक्तिः अन्यस्य उपयोगाय भवति । तां तपश्शक्तिं सः मुनिः यदि अन्यस्मै दास्यति तर्हि स्वस्य तपसः फलं प्राप्स्यति'' इति उक्त्वा सा अदृश्या सञ्जाता ।

सत्यकीर्तिः पुनः मुनेः आश्रमं गत्वा देव्या उक्तं तं श्रावितवान् । मुनिः स्वस्य कमण्डलुं सत्यकीर्तये दत्तवान् । कमण्डलुं यदा सत्यकीर्तिः गृहीतवान् तत्क्षणे एव सः तपःशक्त्या तरुणः सञ्जातः । ततः प्रस्थाय सत्यकीर्तिः वने स्थितां महिलां दृष्ट्वा ताम् उक्तवान् - ''देव्या उक्तं यत् भवत्या दौहित्री यदा भाविनं पतिं पश्यति तदा सा वक्तुं समर्था भविष्यति'' इति ।

''समीचीनम् । मम दौहित्री ह्यः एव अत्र आगता । ताम् आनयामि'' इति उक्त्वा सा महिला अन्तः प्रवेष्टुम् उद्युक्ता । तावति काले तस्याः दौहित्री राजकुमारी गृहात् बहिः आगत्य सत्यकीर्तिं दृष्ट्वा पृष्टवती - ''पितामहि ! कः एषः ?'' इति ।

दौहित्र्याः वचनं श्रुत्वा सा वृद्धा क्षणं यावत् निर्वचना अभूत् । ततः सा ताम् उक्तवती - ''भवती वक्तुं समर्था जाता । अतः एष एव भवत्याः पतिः भविष्यति इति सिद्धम्'' इति ।

सत्यकीर्तिः राजकुमारीं वत्सलां परिणीतवान् । सः कलिङ्गराजस्य जामाता जातः, तदनन्तरं तस्य देशस्य राजा अपि अभूत् ।





# मूर्खः कः ?

विनायकः कश्चन सामान्यः कृषिकः । एषु दिनेषु तस्य जीवनं कष्टमयं जातम् आसीत् । महत्याः वृष्टेः कारणतः क्षेत्रस्थः धान्यराशिः विनष्टः जातः आसीत् । तथैव आम्रवृक्षेषु यदा मञ्जर्यः उत्पन्नाः तदा एव वातावरणं परिवृत्तम् इति कारणात् तत्रापि हानिः जाता । गृहे पुत्र्याः विवाहः निश्चितः आसीत् । सोऽपि अन्यान्यकारणात् स्थगितः ।

तस्य पुत्रः रत्नधरः । सः आत्मानं महाबुद्धिमन्तं भावयति स्म । अतः सः गृहे जातं सर्वं दृष्ट्वा ज्योतिषिकस्य शिवशर्मणः समीपं गतः । शिवशर्मा स्वस्य शुल्कं स्वीकृत्य उक्तवान् – ''एका क्षुद्रदेवता भवतः गृहं प्रविष्टा अस्ति । सप्ताहं यावत् गृहे पूजा करणीया । अन्तिमदिने एकस्मै मूर्खाय पूर्णोदरं भोजनं दातव्यम्'' इति ।

''मुर्खाय भोजनं दातव्यम् ? किमर्थं तथा ?'' इति रत्नधरः पृष्टवान् ।

''भवतः गृहे सर्वेऽपि प्राज्ञाः । बुद्धिमतां पीडनेन क्षुद्रदेवता सन्तोषं प्राप्नोति । मूर्खात् सा दूरे तिष्ठति । भवद्भिः क्रियमाणया पूजया सा तृप्ता भूत्वा भवतां गृहं त्यक्त्वा अन्यत् बुद्धिमतां गृहं प्रविशेत् । अतः कमपि मूर्खं तस्यै प्रदर्शयतु । तेन सा भवतां गृहं त्यक्त्वा गमिष्यति'' इति शिवशर्मा उक्तवान् ।

रत्नधरः गृहं गत्वा मातापितरौ एतं विषयम् उक्तवान् । 'मूर्खस्य आनयनं कथम् ?' इति पृष्टवान् पिता । तदा रत्नधरः वीरभद्रं स्मृतवान् । वीरभद्रः सूरदासस्य पुत्रः । तेषां विषयेऽपि एषा एव वार्ता श्रुता आसीत् यत् एषु दिनेषु तेऽपि कष्टमय्यां परिस्थित्यां सन्ति इति । ग्रामे अनेके जनाः अस्याः परिस्थित्याः कारणीभूतः वीरभद्र एव इति वदन्तः सन्ति । वीरभद्रः आत्मानं बुद्धिमन्तं चिन्तितवान् आसीत् । वस्तुतः सः महामूर्खः । किन्तु यदि अन्ये तं मूर्खं वदन्ति तर्हि सः कुपितः भवति स्म । अतः जनाः तं सोद्देशं 'बुद्धिमान्' इति वदन्तः श्लाघनेन प्रोत्साहयन्ति स्म । अनेन



वीरभद्रः सन्तुष्टः भवति स्म ।

रत्नधरः पितरं वीरभद्रस्य विषयम् उक्तवान् । तदा पिता – ''एतत् युक्तम् एव । किन्तु तस्य आनयनोपायः कः ? 'मूर्खः भवान् अस्माकं गृहं भोजनाय आगच्छतु' इति कथं वदेम तम् ?'' इति पृष्टवान् ।

तदा रत्नधरः – ''चिन्ता मास्तु । मया उपायः चिन्तितः अस्ति । केन प्रकारेण सः आह्वातव्यः इति अहं जानामि । अतः एतत् कार्यं मया एव क्रियते'' इति उक्तवान् ।

पिता 'अस्तु' इत्युक्त्वा गतः । रत्नधरः वीरभद्रं द्रष्टुं गतः । वीरभद्रेण सह वार्तालापं कुर्वन् सः – ''भवतः कण्ठे कियत् माधुर्यम् अस्ति ! भवान् सङ्गीताभ्यासं कुर्वन्नस्ति किम् ?'' इति पृष्टवान् ।

''सत्यम् । सङ्गीताभ्यासेन सह कविता-रचनामपि करोमि'' इति वदन् वीरभद्रः स्वरचितं पद्यमेकं रत्नधरं श्रावितवान् ।

''अहो कवितायाः माधुर्यम् ! एवं सङ्गीते, कवितारचनायां च सामर्थ्यं सर्वेषु न भवति । भाग्यवता एव एतत् प्राप्यते । देवः भवते किञ्चित् सौन्दर्यं यदि अदास्यत् तर्हि समीचीनम् अभविष्यत्'' इति उक्तवान् रत्नधरः ।

''जनाः मां सुन्दरं कथयन्ति एव'' इति उक्तवान् वीरभद्रः ।

तदा रत्नधरः – ''पश्यतु ! मया असत्यं न उच्यते । वस्तुस्थितिः तु एषा । भवतः कविता समीचीना अस्ति । अतः प्रशंसितं मया । भवतः कण्ठे यत् माधुर्यमस्ति तस्यापि मया प्रशंसा कृता । भवान् बुद्धिमान् इत्यपि अहं जानामि एव । किन्तु सुन्दरताविषये किञ्चित् न्यूनता दृश्यते । एतं सत्यांशं गोपयितुम् अहं न समर्थः जातः । मनसि यः विचारः उत्पन्नः सः उक्तः मया । अनेन भवान् कुरूपी इति न मम अभिप्रायः'' इति उक्तवान् रत्नधरः ।

एतस्मात् वीरभद्रः नितरां सन्तुष्टः । ततः स्वस्य गृहे प्रवर्तिष्यमाणस्य भोजनस्य निमित्तं तं निमन्त्रितवान् रत्नधरः । वीरभद्रेण एतत् निमन्त्रणम् अङ्गीकृतम् ।

रत्नधरस्य गृहे शिवशर्मा सप्ताहं यावत् पूजां कृतवान् । पूजासमाप्त्यनन्तरं वीरभद्राय पूर्णोदरं भोजनं परिवेषितम् ।

ततः विनायकस्य परिस्थितिः सुसम्पन्ना अभवत् । तस्य बन्धुः कोऽपि मृतः । 'मम सम्पत्तेः स्वामी एषः विनायकः एव' इति तेन बन्धुना लिखितम् आसीत् । अस्मिन् वर्षे कृषिरपि अत्यन्तं समीचीना जाता । पुत्र्याः विवाहोऽपि उत्तमेन वरेण सह जातः । एवं

सर्वाः समस्याः समाप्ताः ।

कदाचित् मुकुन्दनामकः दूरबन्धुः रत्नधरस्य गृहम् आगतः । रत्नधरस्य बुद्धिमत्तां प्रशंसन् सः – ''आगामिनि शुक्लपक्षे अस्माकं गृहे भोजनार्थम् आगच्छतु'' इति तस्मै आह्वानं दत्तवान् ।

रत्नधरः भीतः सन् – ''भवतः आह्वानं विचित्रमिव भासते । भवता अपि क्षुद्रदेवतायाः पूजा क्रियमाणा अस्ति किम् ?'' इति मुकुन्दं पृष्टवान् ।

''सत्यम् । भवता कथं ज्ञातम् एतत् ?'' इति पृष्टवान् मुकुन्दः ।

तदा रत्नधरः स्वगृहे प्रवृत्तं सर्वं मुकुन्दम् उक्त्वा – ''अस्याः पूजायाः समाप्त्यनन्तरं कस्मैचित् मूर्खाय भोजनं दातव्यम्, न तु अस्मादृशाय बुद्धिमते । सूरदासस्य पुत्रः मया भोजनाय आहूतः । तदनन्तरम् अस्माकं गृहस्य आर्थिकपरिस्थितौ महत् परिवर्तनं जातम् । अनेन एतत् ज्ञातं यत् वीरभद्रः महान् मूर्खः इति । अतः भवता सः वीरभद्रः एव भोजनाय निमन्त्रयितव्यः । एतदर्थं स एव योग्यः'' इति तं बोधितवान् रत्नधरः ।

''एतदर्थमेव अहमपि तं वीरभद्रम् एव आह्वातुं गतः । तेन स्पष्टम् उक्तं यत् 'एतत् सर्वं न विश्वासार्हम् । महत् मौर्ख्यम् एतत् । पूजां विनापि अस्माकं गृहे महत् परिवर्तनं सञ्जातम् अस्ति । इदानीं वयमपि सुखेन शान्त्या च निवसामः' इति । किन्तु भवतः विषये सः किमपि न उक्तवान् । भवन्तम् अपमानितं कर्तुं न इच्छति सः'' इति उक्तवान् मुकुन्दः ।

''तर्हि किमर्थं वा भवान् मम समीपम् आगतः ? भवान् मां मूर्खं भावयति किम् ?'' इति कोपेन पृष्टवान् रत्नधरः ।

''भवान् मूर्खः इति अहं किमर्थं वा वदेयम् ? भवते आह्वानं दातव्यम् इति ज्योतिषिकः शिवशर्मा मां सूचितवान् । तस्य सूचनया अहं भवते आह्वानं दातुम् आगतः'' इति विवरणं दत्तवान् मुकुन्दः ।

येन क्षुद्रदेवतायाः पूजा करणीया इति मह्यं सूचना दत्ता तस्य शिवशर्मणः मनसि मम विषये कीदृशः अभिप्रायः अस्ति इति रत्नधरेण इदानीं स्पष्टतया ज्ञातम् । तस्य शिरः लज्जया अवनतम् । किमपि वक्तुम् अशक्नुवन् सः तूष्णीं स्थितः ।



पिलिप्पैन्देशस्य आख्यानम्

# जगन्निर्माणं कथम् अभूत् ?

सहस्राधिकेभ्यः वर्षेभ्यः पूर्वं जगत् एवं न आसीत् । भूमिः, सूर्यः, चन्द्रः, नक्षत्राणि वा न आसन् । केवलजलमयम् आसीत् तत् । उपरि आकाशः तु आसीत् ।

समुद्रस्य राजा आसीत् भगवान् मगुवायनः । कप्ताननामकः आकाशस्य राजा आसीत् । मगुवायनस्य पुत्री लिडागतानामिका । (जलनिधिः इति तस्य पदस्य अर्थः ।) कप्तानस्य पुत्रः लिहाङ्गिनः इति । (पवनः इति तस्य पदस्य अर्थः ।)

कदाचित् कप्तानः पुत्रं लिहाङ्गिनम् उक्तवान् – ''मगुवायनस्य पुत्री कुतः भवता न परिणेतव्या ?'' इति । लिहाङ्गिनः एतं प्रस्तावम् अङ्गीकृतवान् । मगुवायनोऽपि अनेन विचारेण सन्तुष्टः । एवम् उभयोः अपि सहमत्या स च विवाहः सम्पन्नः । ततः जलनिधिपवनौ दम्पती जातौ ।

तयोः त्रयः पुत्राः, एका पुत्री च अभवन् । पुत्राणां नामानि – लिकालिबूतनः, लियादलावः लिबूलनः चेति । पुत्र्याः नाम लिसुगा इति ।



लिकालिबूतनस्य शरीरं शिलया निर्मितम् आसीत् । सः बलवान् शूरश्च । द्वितीयपुत्रस्य शरीरं कनकमयम् आसीत् । सः सर्वदा सन्तोषेण तिष्ठति स्म । तृतीयस्य पुत्रस्य शरीरं ताम्रमयम् आसीत् । एषः दुर्बलः आसीत् ।

पुत्री लिसुगा रजतमयशरीरयुक्ता, मधुरा, भद्रा च आसीत् । एतेषु सर्वेषु अपि मातापितरौ समानप्रीतिमन्तौ आस्ताम् । ते सर्वेऽपि सुखेन आनन्देन च जीवन्ति स्म ।

गते काले लिहाङ्गिनः मृतः । तस्य मरणानन्तरं ज्येष्ठपुत्रः वायूनाम् आधिपतिः सञ्जातः । लिडागता अपि मृता ।

ज्येष्ठः वायुप्रदेशे अधिकारं प्राप्य अहङ्कारी सन् 'इतोऽपि अधिका शक्तिः मया सम्पादनीया' इति अचिन्तयत् । 'वायुप्रदेशे मम अधिकारः अस्ति । किन्तु एतत् न पर्याप्तम् । मम इतोऽपि अधिकशक्तिः आवश्यकी । अतः अहं कप्तानम् आक्रम्य आकाशमपि स्वाधीनं करिष्यामि' इति सः निर्णीतवान् ।

सः स्वस्य अनुजद्वयम् अपि साहाय्यं प्रार्थितवान् । तौ एतत् न अङ्गीकृतवन्तौ । परम् उपायेन तयोरपि साहाय्यं लब्धं तेन । त्रयः अपि मिलित्वा आकाशे आक्रमणं कृतवन्तः ।

ज्येष्ठः प्रचण्डमारुतेन झञ्झावातेन च



आकाशस्य द्वाराणि चूर्णीकर्तुम् आरब्धवान् । द्वाराणि ध्वस्तानि जातानि । ततः त्रयः अपि आकाशस्य अन्तः प्रविष्टाः । किन्तु क्रोधेन रक्तचक्षुः कप्तानः तत्र आगतः । सः त्रीणि वज्राणि तेषाम् उपरि क्षिप्तवान् ।

प्रथमं वज्रं ताम्रमयशरीरवन्तं तृतीयपुत्रं कन्दुकरूपेण पर्यवर्तयत् । द्वितीयस्य वज्रस्य कारणतः सुवर्णशरीरी द्वितीयः द्रुतः जातः ।

तृतीयं वज्रं ज्येष्ठपुत्रस्य शिलामयं शरीरं चूर्णीकुर्वत् समुद्रे पातितवत् । ज्येष्ठपुत्रस्य चूर्णीकृतस्य शरीरस्य एकैकः भागः अपि विशालः आसीत् । अतः एकैकः अपि भागः जलस्य स्तरम् अतिरिच्य उपरि आगतः । स एव पृथिवी इति उच्यते ।

एतदभ्यन्तरे लिसुगा भ्रातॄन् अन्विष्यन्ती आकाशं प्रति गता । तस्याः उपरि अपि कप्तानः वज्रमेकं क्षिप्तवान् । तेन तस्याः मृदुशरीरं सहस्रधा भग्नम् अभवत् ।

कप्तानः आकाशात् अधः आगत्य समुद्रं विदारयन् मगुवायनम् आहूतवान् । आकाशस्य उपरि आक्रमणस्य कारणं पृष्टवान् । मगुवायनः उक्तवान् – ''आकाशे जातम् आक्रमणम् अहं न जानामि एव । अहं गभीरे समुद्रे निद्रितः आसम्'' इति ।

तस्य महता प्रयत्नेन कप्तानस्य कोपः शान्तः अभवत् । तौ उभौ अपि स्वपौत्र-दौहित्राणां मरणेन दुःखितौ अभूताम् । विशेषेण पौत्र्याः लिसुगायाः मरणम् अधिकदुःखम् अजनयत् । तौ केनापि प्रकारेण तेषां पुनरुज्जीवनं कर्तुम् असमर्थौ । अतः तौ तेषां सर्वेषां शरीराणां भागस्य सुन्दरं रूपं दातव्यम् इति निश्चितवन्तौ ।

एवं निर्णीय तौ द्वितीयपुत्रस्य शरीरभागं सूर्यं, तृतीयपुत्रस्य शरीरभागं चन्द्रं च कृतवन्तौ । रजतमयशरीरयुक्तायाः लिसुगायाः शरीरस्य सहस्रं भागाः नक्षत्राणि अभवन् । तौ दुष्टाय प्रथमपुत्राय कमपि प्रकाशं न दत्तवन्तौ । किन्तु तस्य शरीरस्य भागं मनुष्याणाम् आधारभूतं कर्तुं तौ निश्चितवन्तौ । अतः कप्तानः मगुवायनाय एकं बीजं दत्तवान् । तच्च मगुवायनः भूमौ उप्तवान् । तच्च बीजं लिकातिबूतनस्य विशालशरीरस्य भागः आसीत् ।

अचिरादेव तस्मात् बीजात् वंशवृक्षः एकः उद्भूतः । तस्य वृक्षस्य शाखायाः अग्रभागात् काचन स्त्री, कश्चित् पुरुषश्च उत्पन्नौ । पुरुषस्य नाम सिकालकः, स्त्रियः नाम सिकाबा इति । एतौ मानवानां पूर्वजौ । एवं सूर्यचन्द्रनक्षत्राणाम् उत्पत्तिः जाता । पृथिव्यां मानवजातेः जीवनं च आरब्धम् ।

# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

2

राजा शान्तिदेवः सेनापतिना वीरसिंहेन क्रियमाणं कुतन्त्रं ज्ञातवान् । सः राज्ञीं सूचयति यत् भवत्या रहस्यमार्गेण प्रासादात् निर्गन्तव्यम् इति । एतावता शत्रूणाम् आक्रमणम् आरब्धं भवति ।...

चित्रम् - गान्धी अय्यः

मम प्रतीक्षा न करणीया । एषः गुप्तमार्गः भवतीं पुत्रं च सुरक्षितं स्थलं प्रति प्रापयति ।

भवतु आर्य !

राजा स्वस्य प्रकोष्ठम् आगच्छति ।

केनचित् क्रुद्धेन क्रियमाणं द्वारताडनशब्दं शृणोति राजा ।

कः एवं कुर्वन् स्यात् ?

राजा गुप्तरन्ध्रेण बहिः दृष्टिं प्रसारयति ।

वीरसिंहस्य जनः !

केचन सुदृढेन दारुखण्डेन द्वारभञ्जनं कर्तुं प्रयत्नं कुर्वन्ति ।

राजा हठात्
द्वारस्य
उद्घाटनं
करोति ।

आक्रमणकाराः सर्वे भूमौ पतन्ति ।

स्वस्य खड्गं चालयति
राजा ।...

तेन केचन मारिताः भवन्ति ।

राजकुमारस्य जन्मदिनोत्सवाचरणं महता वैभवेन प्रचलति । सामान्यजनानां महान् सम्मर्दः । प्रासादस्य अन्तः किं प्रचलति इति ते न जानन्ति ।






राजा अपायात् रक्षितः भवति ।



.. सः सोपानेषु स्थितान् शत्रून् सम्मुखीकरोति ।


वशीकर्तुम् आगतानां तेषां योजनां विफलीकरोति राजा ।


सः वीरसिंहं सम्मुखीकरोति । एतदवसरे वीरसिंहस्य कर्णः कर्तितः भवति ।


राजा कथमपि छदेः ऊर्ध्वभागं प्राप्नोति ।


कश्चन शत्रुसैनिकः अग्रे गच्छतः राज्ञः अवरोधं करोति ।


किन्तु राजा तं भित्तितः अधः पातयति ।


शत्रवः बहवः भवनस्य आरोहणाय प्रयत्नरताः सन्ति यत् तत् पश्यति राजा ।
(अनुवर्तते)

# कालोऽयं विनोदस्य

अत्रास्ति एकम् अरण्यदृश्यम् । अत्र सन्ति बहूनि विनोदस्थानानि । अङ्कनीं स्वीकृत्य सज्जाः भवत ।

## १. वर्णैः अलङ्क्रियतां चित्रम्

मण्डूकरायः विहारार्थं प्रस्थितः अस्ति । भवन्तः तं वर्णैः विभूषयन्तु । तस्य विहारयात्रायाः शोभां वर्धयन्तु च ।

## २. उपक्रियतां लिण्डा

'लिण्डा'नामिका इन्द्रगोपिका नितरां खिन्ना अस्ति । तस्याः भगिनी वृक्षकाण्डस्य अन्तः निबद्धा अस्ति । तस्याः समीपं गमनाय लिण्डायाः साहाय्यं कुर्वन्तु मार्गं निर्दिशन्तः । सा कीटेन स्पृष्टा यथा स्यात् तथा जागरूकता भवतु ।





(उत्तराणि ६६ तमे पृष्ठे)

चित्रशीर्षिका
# चित्रशीर्षिकास्पर्धा




VICKY MANOHAR


SOURAA

**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

**पुरस्कृता शीर्षिका**





कणशः सङ्गृहीतं परीक्ष्यते ।
क्षणशः ग्राहकः प्रतीक्ष्यते ।

## अभिनन्दनानि

**'अगस्ट्'मासस्य चित्रशीर्षिकाप्रेषिका -**
**श्रीमती मीरा रामनाथ**
३४/६,आस्पिरन् गार्डन्,१ स्ट्रीट्, किल्पार्क्
चेन्नै - ६०० ०१०

**मनोविनोदस्य उत्तराणि -**
(पृ. ६४,६५)

**३. अन्येभ्यः भिन्नः कः ?**
'डि'चित्रम् इतरेभ्यः भिन्नम् अस्ति ।

**४. ज्ञायतां कोऽहम् ?**
'बि'पुष्पस्य अन्तः अस्ति कीटः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

